**तत्र हेतावसत्येव कार्योत्पादेन्वयः कुतः। व्यतिरेकश्च संवृत्त्या तौ चेत् किं पारमार्थिकम्॥१२६॥**

न हि क्षणक्षयैकांते सत्येव कारणे कार्यस्योत्पादः सभवति कार्यकारणयोरेककालानुषंगात्, कारणस्यैकस्मिन् क्षणे जातस्य कार्यकालेपि सत्त्वे क्षणभंगभंगप्रसंगाच्च। सर्वथा तु विनष्टे कारणे कार्यस्योत्पादे कथमन्वयो नाम चिरतरविनष्टान्वयवत्। तत एव व्यतिरेकाभावः कारणाभावे कार्यस्याभावाभावात्। स्यान्मतं। स्वकाले सति कारणे कार्यस्य स्वसमये प्रादुर्भावोऽन्वयो असति वाऽभवनं व्यतिरेको न पुनः कारणकाले तस्य भवनमन्वयोऽन्यदात्वभवनं व्यतिरेकः। सर्वथाप्यभिन्नदेशयोः कार्यकारणभावोपगमे कुतोग्निधूमादीनां कार्यकारणभावो भिन्नदेशतयोपलंभात्। भिन्नदेशयोस्तु कार्यकारणभावे भिन्नकालयोः स कथं प्रतिक्षिप्यते येनान्वयव्यतिरेकौ तादृशौ न स्यातां। कारणत्वेनाभिमतेप्यर्थे स्वकाले सति कस्यचित्स्वकाले भवनमसति वाऽभवनमन्वयो व्यतिरेकश्च स्यादित्यपि न मंतव्यमन्यत्र समानत्वात्। कारणत्वेनानभिमतेर्थे स्वदेशे सति सर्वस्य स्वदेशे भवनमन्वयो असति वाऽभवनं व्यतिरेक इत्यपि वक्तुं शक्यत्वात्। स्वयोग्यताविशेषात्कयोश्चिदेवार्थयोर्भिन्नदेशयोरन्वयव्यतिरेकनियमात्कार्यकारणनियमपरिकल्पनायां भिन्नकालयोरपि स किं न भवेत्तत एव सर्वथा विशेषाभावात्। तदेतदप्यविचारितरम्यं। तन्मते योग्यताप्रतिनियमस्य विचार्यमाणस्यायोगात्। योग्यता हि कारणस्य कार्योत्पादनशक्तिः, कार्यस्य च कारणजन्यत्वशक्तिस्तस्याः प्रतिनियमः, शालिबीजांकुरयोश्च भिन्नकालत्वाविशेषेपि शालिबीजस्यैव शाल्यंकुरजनने शक्तिर्न यवबीजस्य, तस्य यवांकुरजनने न शालिबीजस्येति कथ्यते। तत्र कुतस्तच्छक्तेस्तादृशः प्रतिनियमः? स्वभावत इति चेत् न, अप्रत्यक्षत्वात्। परोक्षस्य शक्तिप्रतिनियमस्य पर्यनुयुज्यमानतायां स्वभावैरुत्तरस्यासंभवात्, अन्यथा सर्वस्य विजयित्वप्रसंगात्। प्रत्यक्षप्रतीत एव चार्थे पर्यनुयोगे स्वभावैरुत्तरस्य स्वयमभिधानात्। कथमन्यथेदं शोभेत,--"यत्किंचिदात्माभिमत विधाय निरुत्तरस्तत्र कृतः परेण। वस्तुस्वभावैरिति वाच्यमित्थ तदुत्तरं स्याद्विजयी समस्त। १। प्रत्यक्षेण प्रतीतेर्थे यदि पर्यनुयुज्यते। स्वभावैरुत्तरं वाच्यं दृष्टे कानुपपन्नता। २।" इति। शालिबीजादेः शाल्यंकुरादिकार्यस्य दर्शनात्तज्जननशक्तिरनुमीयत इति चेत्, तस्य तत्कार्यत्वे प्रसिद्धेऽप्रसिद्धेपि वा? प्रथमपक्षेपि(') कुतः शाल्यंकुरादेः शालिबीजादिकार्यत्वं सिद्धं? न तावदध्यक्षात्तत्र तस्याप्रतिभासनात्, अन्यथा सर्वस्य तथा निश्चयप्रसंगात्। तद्भावभावालिंगात्तत्सिद्धिरिति चेन्न, साध्यसमत्वात्। को हि साध्यमेव साधनत्वेनाभिदधातीत्यन्यत्रास्वस्थात्। तद्भावभाव एव हि तत्कार्यत्वं न ततोन्यत्। शालिबीजादिकारणकत्वाच्छाल्यंकुरादेस्तत्कार्यत्वं सिद्धमित्यपि तादृगेव। परस्पराश्रितं चैतत्, सिद्धे शालिबीजादिकारणकत्वे शाल्यकुरादेस्तत्कार्यत्वसिद्धिस्तत्सिद्धौ च शालिबीजादिकारणत्वसिद्धिरिति। तदनुमानात् प्रत्यक्षप्रतीते तस्य तत्कार्यत्वे समारोपः कस्यचिद्व्यवच्छिद्यत इत्यप्यनेनापास्त, स्वयमसिद्धात्साधनात् तद्व्यवच्छेदासंभवात्। तदनतरं तस्योपलंभात्तत्कार्यत्वसिद्धिरित्यपि फल्गुप्रायं, शाल्यंकुरादेः पूर्वाखिलार्थकार्यत्वप्रसंगात्। शालिबीजाभावे तदनंतरमनुपलंभान्न तत्कार्यत्वमिति चेत्, सार्द्रेंधनाभावेंगाराद्यवस्थाग्नेरनंतरं धूमस्यानुपलब्धेरग्निकार्यत्वं माभूत्। सामग्रीकार्यत्वाद्धूमस्य नाग्निमात्रकार्यत्वमिति चेत्, तर्हि सकलार्थसहितशालिबीजादिसामग्रीकार्यत्वं शाल्यकुरादेरस्तु विशेषाभावात्। तथा च न किंचित्कस्यचिदकारणमकार्यं वेति सर्वं सर्वस्मादनुमीयेतेति वा कुतश्चित् किंचिदिति नानुमानात्कस्यचिच्छक्तिप्रतिनियमसिद्धिर्यतोन्वयव्यतिरेकप्रतिनियमकार्यकारणभावे प्रतिनियमनिबंधनः सिद्ध्येत्। तत एव संवृत्त्यान्वयव्यतिरेकौ यथादर्शनं कारणस्य कार्येणानुविधीयते न तु यथातत्त्वमिति-

चेत्, कथमेवं कार्यकारणभावः पारमार्थिकः? सोपि संवृत्त्येति चेत्, कुतोर्थक्रियाकारित्वं वास्तवं? तदपि सांवृत्तमेवेति चेत्, कथं तल्लक्षणवस्तुतत्त्वमिति न किंचित्क्षणक्षयैकांतवादिनः शाश्वतैकांतवादिन इव पारमार्थिकं सिध्येत् ॥

**तथा सति न बंधादिहेतुसिद्धिः कथंचन । सत्यानेकांतवादेन विना क्वचिदिति स्थितम् ॥१२७॥**

न सत्योऽनेकांतवादः प्रतीतिसद्भावेपि तस्य विरोधवैयधिकरण्यादिदोषोपद्रुतत्वादिति नानुमतव्यं, सर्वथैकांत एव विरोधादिदोषावतारात्, सत्येनानेकांतवादेन विना बंधादिहेतूनां क्वचिदसिद्धेः ॥

**सत्यमद्वयमेवेदं स्वसंवेदनमित्यसत् । तद्व्यवस्थापकाभावात्पुरुषाद्वैततत्त्ववत् ॥ १२८ ॥**

न हि कुतश्चित्प्रमाणादद्वैतं संवेदनं व्यवतिष्ठते ब्रह्माद्वैतवत् प्रमाणप्रमेययोर्द्वैतप्रसंगात् । प्रत्यक्षतस्तद्व्यवस्थापने नाद्वैतविरोध इति चेन्न, अन्यतः प्रत्यक्षस्य भेदप्रसिद्धेः । अनेनानुमानादुपनिषद्वाक्याद्वा तद्व्यवस्थापने द्वैतप्रसंगः कथितः ॥

**न च स्वतः स्थितिस्तस्य ग्राह्यग्राहकतेक्षणात् । सर्वदा नापि तद्भ्रांतिः सत्यसंवित्त्यसंभवात् १२९**

न संवेदनाद्वैतं प्रत्यक्षांतरादनुमानाद्वा स्थाप्यते स्वतस्तस्य स्थितेरिति न साधीयः, सर्वदा ग्राह्यग्राहकाकाराक्रांतस्य संवेदनस्यानुभवनात्, स्वरूपस्य स्वतो गतेरिति वक्तुमशक्तेः । संविदि ग्राह्यग्राहकाकारस्यानुभवनं भ्रांतमिति न वाच्यं, तद्रहितस्य सत्यस्य संवित्त्यभावात् । सर्वदावभासमानस्य सर्वत्र सर्वेषां भ्रांतत्वायोगात् ॥

**यथैवागमविभ्रांतौ पुरुषाद्वैतसत्यता । तत्सत्यत्वे च तद्भ्रांतिरित्यन्योन्यसमाश्रयः ॥ १३० ॥**
**तथा वेद्यादिविभ्रांतौ वेदकाद्वैतसत्यता । तत्सत्यत्वे च तद्भ्रांतिरित्यन्योन्यसमाश्रयः ॥ १३१ ॥**

कथमयं पुरुषाद्वैतं निरस्य ज्ञानाद्वैतं व्यवस्थापयेत् । स्यान्मतं । न वेद्याद्याकारस्य भ्रांतता संविन्मात्रस्य सत्यत्वात्साध्यते किं त्वनुमानात्ततो नेतरेतराश्रयः इति । तदयुक्तं, लिंगाभावात् ।

**विवादगोचरो वेद्याद्याकारो भ्रांतभासजः । अथ स्वप्नादिपर्यायाकारवद्यदि वृत्तयः ॥ १३२ ॥**
**विभ्रांत्या भेदमापन्नो विच्छेदो विभ्रमात्मकः । विच्छेदत्वाद्यथा स्वप्नविच्छेद इति सिध्यतु ॥१३३**

न हि स्वप्नादिदशायां ग्राह्याकारत्वं भ्रांतत्वेन व्याप्तं दृष्टं न पुनर्विच्छेदत्वमिति शक्यं वक्तुं प्रतीतिविरोधात् । तदुभयस्य भ्रांतत्वसिद्धौ किमनिष्टमिति चेत्?

**नित्यं सर्वगतं ब्रह्म निराकारमनंशकम् । कालदेशादिविच्छेदभ्रांतत्वेऽकलयद्द्वयम् ॥ १३४ ॥**

कालविच्छेदस्य भ्रांतत्वे नित्यं देशविच्छेदस्य सर्वगतमाकारस्य निराकारमंशविच्छेदस्य निरंशं ब्रह्म सिद्धं क्षणिकाद्वैतं प्रतिक्षिपतीति कथमनिष्टं सौगतस्य न स्यात् ॥

**नित्यादिरूपसंवित्तेरभावात्तदसंभवे । परमार्थात्मतावित्तेरभावादेतदप्यसत् ॥ १३५ ॥**

न हि नित्यत्वादिस्वभावे परमार्थात्मादिस्वभावे वा संवित्त्यभावं प्रति विशेषोस्ति यतो ब्रह्मणो सत्यत्वे क्षणिकत्वे संवेदनाद्वैतस्यासत्यत्वं न सिध्येत् ॥

**न नित्यं नाप्यनित्यत्वं सर्वगत्वमसर्वगम् । नैकं नानेकमथवा स्वसंवेदनमेव तत् ॥ १३६ ॥**
**समस्तं तद्वचोन्यस्य तन्नाद्वैतं कथंचन । स्वेष्टेतरव्यवस्थानप्रतिक्षेपाप्रसिद्धितः ॥ १३७ ॥**

स्वेष्टस्य संवेदनाद्वयस्य व्यवस्थानमनिष्टस्य भेदस्य पुरुषाद्वैतादेर्वा प्रतिक्षेपो यतोस्य न कथंचनापि प्रसिध्यति, ततो नाद्वैतं तत्त्वं बंधहेत्वादिशून्यमास्थातुं युक्तमनिष्टतत्त्ववत् ॥

**नन्वनादिरविद्येयं स्वेष्टेतरविभागकृत् । सत्येतरेव दुःपारा तामाश्रित्य परीक्षणा ॥ १३८ ॥**
**सर्वस्य तत्त्वनिर्णीतेः पूर्वं किं चान्यथा स्थितिः । एष प्रलाप एवास्य शून्योपप्लववादिवत् ॥१३९॥**
**किंचिन्निर्णीतमाश्रित्य विचारोन्यत्र वर्तते । सर्वविप्रतिपत्तौ हि क्वचिन्नास्ति विचारणा ॥१४०॥**

न हि सर्वं सर्वस्यानिर्णीतमेव विचारात्पूर्वमिति स्वयं निश्चिन्वन् किंचिन्निर्णीतमिष्टं प्रतिक्षेप्तुमर्हति विरोधात् ॥

**तत्रेष्टं यस्य निर्णीतं प्रमाणं तस्य वस्तुतः । तदंतरेण निर्णीतेस्तत्रायोगादनिष्टवत् ॥ १४१ ॥**

यथानिष्टे प्रमाणं वास्तवमंतरेण निर्णीतिर्नोपपद्यते तथा स्वयमिष्टेपीति । तत्र निर्णीतिमनुमन्यमानेन तदनुमंतव्यमेव ॥

**तत्स्वसंवेदनं तावद्यद्युपेयेत केनचित् । संवादकत्वतस्तद्वदक्षलिंगादिवेदनम् ॥ १४२ ॥**
**प्रमाणान्निश्चितादेव सर्वत्रास्तु परीक्षणम् । स्वेष्टेतरविभागाय विद्या विद्योपगामिनाम् ॥ १४३ ॥**

स्वसंवेदनमपि न स्वेष्टं निर्णीतं येन तस्य संवादकत्वात्तत्त्वतः प्रमाणत्वे तद्वदक्षलिंगादिजनितवेदनस्य प्रमाणत्वसिद्धेर्निश्चितादेव प्रमाणात् सर्वत्र परीक्षणं स्वेष्टेतरविभागाय विद्या प्रवर्तेत तत्त्वोपप्लववादिनः, परपर्यनुयोगमात्रपरत्वादिति कश्चित् । सोपि यत्किंचनभाषी, परपर्यनुयोगमात्रस्याप्ययोगात् । तथाहि—

**यस्यापीष्टं न निर्णीतं क्वापि तस्य न संशयः । तदभावे न युज्यंते परपर्यनुयुक्तयः ॥ १४४ ॥**

कथमव्यभिचारित्वं वेदनस्य निश्चीयते? किमदुष्टकारकसंदोहोत्पाद्यत्वेन बाधारहितत्वेन प्रवृत्तिसामर्थ्येनान्यथा वेति प्रमाणतत्त्वे पर्यनुयोगाः संशयपूर्वकास्तदभावे तदसंभवात्, किमयं स्थाणुः किं वा पुरुष इत्यादेः पर्यनुयोगवत् । संशयश्च तत्र कदाचित्क्वचिन्निर्णयपूर्वकः स्थाण्वादिसंशयवत् । तत्र यस्य क्वचित्कदाचिददुष्टकारकसंदोहोत्पाद्यत्वादिना प्रमाणत्वनिर्णयो नास्त्येव तस्य कथं तत्पूर्वकः संशयः, तदभावे कुतः पर्यनुयोगाः प्रवर्तेरन्निति न परपर्यनुयोगपराणि बृहस्पतेः सूत्राणि स्युः ॥

**ओमिति ब्रुवतः सिद्धं सर्वं सर्वस्य वांछितम् । क्वचित्पर्यनुयोगस्यासंभवाच्चनिराकुलम् ॥ १४५ ॥**

ततो न शून्यवादवत् तत्त्वोपप्लववादो वादांतरव्युदासेन सिध्येत् तथानेकांततत्त्वस्यैव सिद्धेः ॥

**शून्योपप्लववादेपि नानेकांताद्विना स्थितिः । स्वयं क्वचिदशून्यस्य स्वीकृतेरनुपप्लुते ॥ १४६ ॥**
**शून्यतायां हि शून्यत्वं जातुचिन्नोपगम्यते । तथोपप्लवनं तत्त्वोपप्लवेपीतरत्र तत् ॥ १४७ ॥**

शून्यमपि हि स्वस्वभावेन यदि शून्यं तदा कथमशून्यवादो न भवेत् । न तस्याशून्यत्वेऽनेकांतादेव शून्यवादप्रवृत्तिः, शून्यस्य निःस्वभावत्वात् । न स्वभावेनाशून्यता नापि परस्वभावेन शून्यता, खरविषाणादेरिव तस्य सर्वथा निर्णेतुमशक्तेः कुतोनेकांतसिद्धिरिति चेत्, तर्हि तत्त्वोपप्लवमात्रमेतदायातं शून्यतत्त्वस्याप्यप्रतिष्ठानात् । न तदपि सिध्यत्यनेकांतमंतरेण तत्त्वोपप्लवमात्रेनुपप्लवसिद्धेः । तत्राप्युपप्लवे कथमखिलं तत्त्वमनुपप्लुतं न भवेत्? ननूपप्लवमात्रेऽनुपप्लव इत्ययुक्तं, व्याघातादभावे भाववत् । तथोपप्लवो न तत्र साधीयास्तत एवाभावेऽभाववत् । ततो यथा न सन्नाप्यसन्नभावः सर्वथा व्यवस्थापयितुमशक्तेः किं तर्ह्यभाव एव, तथा तत्त्वोपप्लवोपि विचारात् कुतश्चिद्यदि सिद्धस्तदा न तत्र केनचिद्रूपेणोपप्लवो नाप्यनुपप्लवो व्याघातात्, किं तर्ह्युपप्लव एवेति नानेकांतावतार इति चेत्, तर्हि प्रमाणतत्त्वं नादुष्टकारकसंदोहोत्पाद्यत्वेन नापि बाधारहितत्वादिभिः स्वभावैर्व्यवस्थाप्यते व्याघातात्, किं तु प्रमाणं प्रमाणमेव प्रमाणत्वेनैव तस्य व्यवस्थानात् । न हि पृथिवी किमग्नित्वेन व्यवस्थाप्यते जलत्वेन वायुत्वेन वेति पर्यनुयोगो युक्तः, पृथिवीत्वेनैव तस्याः प्रतिष्ठानात् । प्रमाणस्वभावा एवादुष्टकारकसंदोहोत्पाद्यत्वादय-

स्ततो न तैः प्रमाणस्य व्यवस्थापने व्याघात इति चेत्. किमिदानीं पर्यनुयोगेन? तत्त्वबलेन प्रमाणस्य सिद्धत्वात् । स्यान्मतं । न विचारात्प्रमाणस्यादुष्टकारकसंदोहोत्पाद्यत्वादयः स्वभावाः प्रसिद्धाः परोपगममात्रेण तेषां प्रसिद्धेः । संशयावतारात्पर्यनुयोगो युक्त एवेति तदप्यसारं, अविचारस्य प्रमाणस्वभावव्यवस्थानप्रतिक्षेपकारिणः स्वयमुपप्लुतत्वात् । तस्यानुपप्लुतत्वे वा कथं सर्वथोपप्लवः? यदि पुनरुपप्लुतानुपप्लुतत्वाभ्यामवाच्योऽविचारस्तदा सर्वं प्रमाणप्रमेयतत्त्वं तथास्त्विति न क्वचिदुपप्लुतैकांतो नाम । यथा चोपप्लवोऽविचारो वा तद्धेतुरुपप्लुतत्वानुपप्लुतत्वाभ्यामवाच्यः स्वरूपेण तु वाच्यः तथा सर्वं तत्त्वमित्यनेकांतादेवोपप्लववादे प्रवृत्तिः सर्वथैकांते तदयोगात् । नन्वेमनेकांतोप्यनेकांतादेव प्रवर्तेत सोप्यन्यस्मादनेकांतादित्यनवस्थानात् कुतः प्रकृतानेकांतसिद्धिः ? सुदूरमप्यनुसृत्यानेकांतस्यैकांतात्प्रवृत्तौ न सर्वस्यानेकांतात् सिद्धिः । 'प्रमाणार्पणादनेकांत' इत्यनेकांतोप्यनेकांतः कथमवतिष्ठते? प्रमाणस्यानेकांतात्मकत्वेनानवस्थानस्य परिहर्तुमशक्तेरेकांतात्मकत्वे प्रतिज्ञाहानिप्रसक्तेः । नयस्याप्येकांतात्मकत्वे अयमेव दोषोऽनेकांतात्मकत्वे सैवानवस्थेति केचित् । तेप्यतिसूक्ष्मेक्षिकांतरितप्रज्ञाः, प्रकृतानेकांतसाधनस्यानेकांतस्य प्रमाणात्मकत्वेन सिद्धत्वादभ्यस्तविषयेऽनवस्थाद्यनवतारात्, तथा तदेकांतसाधनस्यैकांतस्य सुनयत्वेन स्वतः प्रसिद्धेर्नानवस्था प्रतिज्ञाहानिर्वा संभवतीति निरूपणात् । ततः सूक्तं 'शून्योपप्लववादेपि नानेकांताद्विना स्थिति' रिति ॥

ग्राह्यग्राहकतैतेन बाध्यबाधकतापि वा । कार्यकारणतादिर्वा नास्त्येवेति निराकृतम् ॥ १४८ ॥

ग्राह्यग्राहकबाध्यबाधककार्यकारणवाच्यवाचकभावादिस्वरूपेण नास्ति संवेदनं संविन्मात्राकारतयास्तीत्यनेकांतोभीष्ट एव संवेदनाद्वयस्य तथैव व्यवस्थितेर्ग्राह्याद्याकाराभावात्सद्वितीयतानुपपत्तेः सर्वथैकांताभावस्य सम्यगेकांतानेकांताभ्यां तृतीयतानुपपत्तिवत् । इति न प्रातीतिकं, ग्राह्यग्राहकभावादिनिराकरणस्यैकांततोऽसिद्धेः ॥

ग्राह्यग्राहकशून्यत्वं ग्राह्यं तद्ग्राहकस्य चेत् । ग्राह्यग्राहकभावः स्यादन्यथा तदशून्यता ॥ १४९ ॥
बाध्यबाधकभावोपि बाध्यते यदि केनचित् । बाध्यबाधकभावोस्ति नोचेत्कस्य निराकृतिः ॥१५०॥
कार्यापाये न वस्तुत्वं संविन्मात्रस्य युज्यते । कारणस्यात्यये तस्य सर्वदा सर्वथा स्थितिः ॥१५१॥
वाच्यवाचकतापायो वाच्यश्चेत्तद्व्यवस्थितिः । परावबोधनोपायः को नाम स्यादिहान्यथा? ॥१५२॥

सोयं तयोः वाच्यवाचकयोः ग्राह्यग्राहकभावादेर्निराकृतिमाचक्षाणस्तद्भाव साधयत्येवान्यथा तदनुपपत्तेः ॥

संवृत्त्या स्वप्नवत्सर्वं सिद्धमित्यतिविस्मृतम् । निःशेषार्थक्रियाहेतोः संवृतेर्वस्तुतामितः ॥ १५३ ॥
यदेवार्थक्रियाकारि तदेव परमार्थसत् । सांवृतं रूपमन्यत्तु संविन्मात्रमवस्तु सत् ॥ १५४ ॥

'स्वप्नवत्सांवृतेन रूपेण ग्राह्यग्राहकभावाभावो ग्राह्यो बाध्यबाधकभावो बाध्यः कार्यकारणभावोपि कार्यो वाच्यवाचकभावो वाच्य' इति ब्रुवाणो विस्मरणशीलः, स्वयमुक्तस्य सांवृतरूपानर्थक्रियाकारित्वस्य विस्मरणात् । तथा ह्यशेषग्राह्यग्राहकताद्यर्थक्रियानिमित्तं यत्सांवृतं रूपं तदेव परमार्थसत् तद्विपरीतं तु संवेदनमात्रमवस्तु सदिति दर्शनांतरमायातम् ॥

संवृतं चेत्क नामार्थक्रियाकारि च तन्मतम् । हंत सिद्धं कथं सर्वं संवृत्त्या स्वप्नवत्तव ॥ १५५ ॥

ग्राह्यग्राहकभावाद्यर्थक्रियापि सांवृती न पुनः पारमार्थिकी यतस्तन्निमित्तं सांवृतं रूपं परमार्थसत् सिध्येत् । तात्त्विकी त्वर्थक्रिया स्वसंवेदनमात्रं, तदात्मकं संवेदनाद्वैतं कथमवस्तु सन्नाम? ततोर्थक्रियाकारि

सांवृतं चेति व्याहतमेतदिति यदि मन्यसे, तदा कथं स्वप्नवत् संवृत्त्या सर्वं सिद्धमिति ब्रूषे तदवस्थत्वाद्व्याघातस्य सांवृतं सिद्धं चेति ॥

**स्वप्नसिद्धं हि नो सिद्धमस्वप्नः कोऽपरोन्यथा। संतोषकृन्न वै स्वप्नः संतोषं न प्रकल्पते ॥ १५६ ॥**
**वस्तुन्यपि न संतोषो द्वेषात्तदिति कस्यचित्। अवस्तुन्यपि रागात् स्यादित्यस्वप्नोस्त्वबाधितः १५७**

यथा हि स्वप्नसिद्धमसिद्धं तथा सवृंतिसिद्धमप्यसिद्धमेव, कथमन्यथा स्वप्नसिद्धमपि सिद्धमेव न भवेत्तथाच न कश्चित्ततोऽपरोऽस्वप्नः स्यात्। संतोषकार्यस्वप्न इति चेन्न, स्वप्नस्यापि संतोषकारित्वदर्शनात्। कालांतरे न स्वप्नः संतोषकारी इति चेत्, समानमस्वप्ने। सर्वेषां सर्वत्र सतोषकारी न स्वप्न इति चेत्, तादृगस्वप्नेपि। कस्यचित्कचित्कदाचित्संतोषहेतोरस्वप्नत्वे तु न कश्चित्स्वप्नो नाम। न च संतोषहेतुत्वेन वस्तुत्वं व्याप्तं, कचित्कस्यचिद् द्वेषात् सतोषाभावेपि वस्तुत्वसिद्धेः। नापि वस्तुत्वेन संतोषहेतुत्वमवस्तुन्यपि कल्पनारूढे रागात् कस्यचित्सतोषदर्शनात्। ततः सुनिश्चितासंभवद्बाधकोऽस्वप्नोऽस्तु ॥

**बाध्यमानः पुनः स्वप्नो नान्यथा तद्विदेक्ष्यते। स्वतः कचिदबाध्यत्वनिश्चयः परतोपि वा ॥१५८**
**कारणद्वयसामर्थ्यात्संभवन्ननुभूयते। परस्पराश्रयं तत्रानवस्थां च प्रतिक्षिपेत् ॥ १५९ ॥**

बाधारहितोऽस्वप्नो बाध्यमानस्तु स्वप्न इति तयोर्भेदोन्वीक्ष्यते, नान्यथा। ननु चास्वप्नज्ञानस्याबाध्यत्वं यदि अत एव निश्चीयते तदेतरेतराश्रयः, सत्यऽबाध्यत्वनिश्चये सवेदनस्यास्वप्नत्वनिश्चयस्तस्मिन् सत्यबाध्यत्वनिश्चय इति। परतोऽस्वप्नवेदनात्तस्याबाध्यत्वनिश्चये तस्याप्यबाध्यत्वनिश्चयोन्यस्मादस्वप्नवेदनादित्यनवस्थानान्न कस्यचिदबाध्यत्वनिश्चय इति केचित्। तदयुक्तं। कचित्स्वतः कचित्परतः संवेदनस्याबाध्यत्वनिश्चयेऽन्योन्याश्रयानवस्थानवतारात्। न च कचित्स्वतस्तन्निश्चये सर्वत्र स्वतो निश्चयः परतोपि वा कचिन्निर्णीतौ सर्वत्र परत एव निर्णीतिरिति चोद्यमनवद्यं हेतुद्वयनियमान्नियमसिद्धेः। स्वतस्तन्निश्चये हि बहिरंगो हेतुरभ्यासादिः, परतोऽनभ्यासादिः, अंतरंगस्तु तदावरणक्षयोपशमविशेषः संप्रतीयते। तदनेन स्वप्नस्य बाध्यमानत्वनिश्चयेप्यन्योन्याश्रयानवस्थाप्रतिक्षेपः प्रदर्शित, इति स्वप्नसिद्धमसिद्धमेव, तद्वत्संवृतिसिद्धमपीति न तदाश्रयं परीक्षणं नाम ॥

**ततो न निश्चितान्मानाद्विना तत्त्वपरीक्षणम्। ज्ञाने येनाद्वये शून्येन्यत्र वा तत्प्रतन्यते ॥ १६० ॥**
**प्रमाणासंभवाद्यत्र वस्तुमात्रमसंभवि। मिथ्यैकांतेषु का तत्र बंधहेत्वादिसंकथा ॥ १६१ ॥**

प्रमाणनिष्ठा हि वस्तुव्यवस्था तन्निष्ठा बंधहेत्वादिवार्ता, न च सर्वथैकाते प्रमाणं संभवतीति वीक्ष्यते ॥

**स्याद्वादिनामतो युक्तं यस्य यावत्प्रतीयते। कारणं तस्य तावत्स्यादिति वक्तुमसंशयम् ॥ १६२ ॥**

प्रतीत्याश्रयणे सम्यक् चारित्र दर्शनविशुद्धिविजृंभितं प्रवृद्धेद्धबोधमधिरूढमनेकाकारं सकलकर्मनिर्दहनसमर्थं यथोदितमोक्षलक्ष्मीसपादननिमित्तमसाधारण, साधारणं तु कालादिसंपदिति निर्बाधमनुमन्यध्वं, प्रमाणनयैस्तत्त्वाधिगमसिद्धेः ॥

**नाना नानात्मनीनं नयनयनयुतं तन्न दुर्णीतिमानं**
**तत्त्वश्रद्धानशुद्ध्युष्युषिततनु बृहद्बोधधामादिरूढं।**
**चंचच्चारित्रचक्रं प्रचुरपरिचरच्चंडकर्मारिसेनां**
**सातुं साक्षात्समर्थं घटयतु सुधियां सिद्धसाम्राज्यलक्ष्मीम् ॥ १ ॥**

*इति तत्त्वार्थश्लोकवार्तिकालंकारे प्रथमाध्यायस्य प्रथममाह्निकम्।*

---

१ परतोनिश्चये अनभ्यासादिर्बहिरंगो हेतु। २ प्रमाणात्।

अथ सम्यग्दर्शनविप्रतिपत्तिनिवृत्त्यर्थमाह;—

## तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् ॥ २ ॥

ननु सम्यग्दर्शनशब्दनिर्वचनसामर्थ्यादेव सम्यग्दर्शनस्वरूपनिर्णयादशेषतद्विप्रतिपत्तिनिवृत्तेः सिद्धत्वात्तदर्थं तल्लक्षणवचनं न युक्तिमदेवेति कस्यचिदारेका, तामपाकरोति,—

**सम्यक्शब्दे प्रशंसार्थे दृशावालोचनस्थितौ । न सम्यग्दर्शनं लभ्यमिष्टमित्याह लक्षणम् ॥ १ ॥**
**सूत्रकारोऽत्र तत्त्वार्थश्रद्धानमिति दर्शनम् । धात्वनेकार्थवृत्तित्वाद् दृशेः श्रद्धार्थतागतेः ॥ २ ॥**

सम्यगिति प्रशंसार्थो निपातः क्वयतो वेति वचनात् प्रशंसार्थोऽयं सम्यक् शब्दः सिद्धः प्रशस्तनिःश्रेयसाभ्युदयहेतुत्वाद्दर्शनस्य प्रशस्तत्वोपपत्तेर्ज्ञानचारित्रवत् । दृशेश्चालोचने स्थितिः प्रसिद्धा, दृशिर् प्रेक्षणे इति वचनात् । तत्र सम्यक् पश्यत्यनेनेत्यादिकरणसाधनत्वादिव्यवस्थाया दर्शनशब्दनिरुक्तेरिष्टलक्षणं सम्यग्दर्शनं न लभ्यत एव ततः प्रशस्तालोचनमात्रस्य लब्धेः । न च तदेवेष्टमतिव्याप्तित्वादभव्यस्य मिथ्यादृष्टेः प्रशस्तालोचनस्य सम्यग्दर्शनप्रसंगात् । ततः सूत्रकारोऽत्र "तत्त्वार्थश्रद्धानं सम्यग्दर्शनम्" इति तल्लक्षणं ब्रवीति, तद्वचनमंतरेणातिव्याप्तेः परिहर्तुमशक्तेः । शब्दार्थातिक्रमः श्रद्धानार्थत्वाभावाद् दृशेरिति चेत् न, अनेकार्थत्वाद्धातूनां दृशेः श्रद्धानार्थत्वगतेः । कथमनेकस्मिन्नर्थे संभवत्यपि श्रद्धानार्थस्यैव गतिरिति चेत्, प्रकरणविशेषात् । मोक्षकारणत्वं हि प्रकृतं तत्त्वार्थश्रद्धानस्य युज्यते नालोचनादेरर्थांतरस्य । भगवदर्हदाद्यालोचनस्य मोक्षकारणत्वोपपत्तेस्तत्प्रकरणादपि न तन्निवृत्तिरिति चेत्, तत्त्वार्थश्रद्धानेन रहितस्य मोक्षकारणत्वेऽतिप्रसंगात्, तेन सहितस्य तु तत्कारणत्वे तदेव मोक्षस्य कारणं तदालोचनाभावेपि श्रद्धानस्य तद्भावाविरोधात् ॥

**अर्थग्रहणतोनर्थश्रद्धानं विनिवारितम् । कल्पितार्थव्यवच्छेदोर्थस्य तत्त्वविशेषणात् ॥ ३ ॥**
**लक्षणस्य ततो नातिव्याप्तिर्दृग्मोहवर्जितम् । पुंरूपं तदिति व्यस्ता तस्याव्याप्तिरपि स्फुटम् ॥ ४ ॥**

श्रद्धानं सम्यग्दर्शनमित्युच्यमानेऽनर्थश्रद्धानमपि तत्स्यादित्यतिव्याप्तिर्लक्षणस्य मा भूत् अर्थग्रहणात् । न चार्थानर्थविभागो दुर्घटः प्रमाणोपदर्शितस्यार्थत्वसिद्धेरितरस्यानर्थत्वव्यवस्थानात् । सर्वो वाग्विकल्पगोचरोर्थ एव प्रमाणोपदर्शितत्वादन्यथा तदनुपपत्तेः, प्रमाणोपदर्शितत्वं तु सर्वस्य विकल्पवाग्गोचरत्वान्यथानुपपत्तेः ततो नानर्थः कश्चिदित्यन्ये । तेप्येवं प्रष्टव्याः । सर्वोनर्थ एवेति पक्षोऽर्थे स्याद्वा न वा? स्याच्चेत्सर्वस्यार्थत्वव्याघातो दुर्निवारः, न स्याच्चेत्तेन व्यभिचारी हेतुर्वाग्विकल्पगोचरत्वेन प्रमाणोपदर्शितत्वस्यार्थत्वमंतरेणापि भावात् । यदि पुनः प्रमाणोपदर्शित एव न भवति तदा विकल्पवाग्गोचरत्वं तेनानैकांतिकं साध्याभावेपि भावात् । यदि पुनः सर्वोनर्थ एवेति पक्षो विकल्पवाग्गोचरो न भवतीति ब्रुवते तदा स्ववचनविरोधः । कुतश्चिदविद्याविशेषात् सर्वोनर्थ इति व्यवहारो न तात्त्विक इति चेत्, स तर्ह्यविद्याविशेषोऽर्थोऽनर्थो वा? यद्यर्थस्तदा कथमेतन्निबंधनो व्यवहारोऽतात्त्विकः स्यात्सर्वोर्थ एवेति व्यवहारवत् । सोनर्थश्चेत्, कथं सर्वोर्थ एवेत्येकांतः सिद्ध्येत्? सर्वोनर्थ एवेत्येकांतोपि न साधीयान्, तद्व्यवस्थापकस्यानर्थत्वे ततस्तत्सिद्ध्ययोगादर्थत्वे सर्वानर्थतैकांतहानेः । संविन्मात्रमर्थानर्थविभागरहितमित्यपि न श्रेयः, संविन्मात्रस्यैवार्थत्वात्ततोन्यस्यानर्थत्वसिद्धेः । सर्वस्याप्यर्थानर्थविभागसिद्धेरवश्यंभावाद्युक्तमर्थग्रहणमनर्थश्रद्धाननिवृत्त्यर्थं । कल्पितार्थश्रद्धानं सम्यग्दर्शनमेवं स्यात्तनः सैवातिव्याप्तिरिति चेत् न, तत्त्वविशेषणात् । नन्वर्थग्रहणादेव कल्पितार्थस्य निवृत्तेस्तस्यानर्थत्वाद्व्यर्थं तत्त्वविशेषणमिति चेत् न, धनप्रयोजनाभिधेयविशेषाभावानामर्थशब्दवाच्यानां ग्रहणप्रसंगात् । न च तेषां श्रद्धानं सम्य-

ग्दर्शनस्य लक्षणं युक्तं. धर्मादर्थो धनमिति श्रद्दधानस्याभव्यादेरपि सम्यग्दर्शनप्रसक्तेः। "कोर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिक" इति प्रयोजनवाचिनोर्थशब्दात् प्रयोजनं श्रद्दधतोपि सद्दृष्टित्वापत्तेः। धनप्रयोजनयोरर्थाभिप्रायो मोहोदयादवास्तव एव प्रक्षीणमोहानामुदासीनानामिव ममेदं स्वं धनं प्रयोजनं चेति संप्रत्ययानुपपत्तेः। सुवर्णादेर्देशकालनरांतरापेक्षायां धनप्रयोजनत्वाप्रतीतेर्वस्तुधर्मस्य तदयोगात्सुवर्णत्वादिवदिति केचित्। तेषां क्रोधादयोप्यात्मनः पारमार्थिका न स्युर्मोहोदयनिबंधनत्वाद्धनप्रयोजनयोरर्थाभिप्रायवत्। तेषामौदयिकत्वेन वास्तवत्वमिति चेत्, अन्यत्र समानं। वस्तुस्वरूपं धनं प्रयोजनं वा न भवतीति चेत्, सत्यं, वैश्रसिकत्वापेक्षया तस्य वस्तुरूपत्वव्यवस्थानासंभवात्। परोपाधिकृतत्वेन तु तस्य वास्तवत्वमनिषिद्धमेवेति नानर्थत्वं, येनार्थग्रहणादेव तन्निवर्तनं सिध्येत्। तथाभिधेये विशेषे अभावे चार्थे श्रद्धानं सम्यग्दर्शनस्य लक्षणमव्यापि प्रसज्यते, सर्वस्याभिधेयत्वाभावाद्व्यंजनपर्यायाणामेवाभिधेयतया व्यवस्थापितत्वादर्थपर्यायाणामाख्यातुमशक्तेरननुगमनात् सकेतस्य तत्र वैयर्थ्याद् व्यवहारासिद्धेर्नाभिधेयस्यार्थस्य श्रद्धानं तल्लक्षणं युक्तं। नापि विशेषस्य सामान्यश्रद्धानस्य दर्शनत्वाभावप्रसंगात्। तथैवाभावस्यार्थस्य श्रद्धानं न तल्लक्षणं भावश्रद्धानस्यासंग्रहादव्याप्तिप्रसक्तेः। नन्वेवमर्थग्रहणादिवत्तत्त्ववचनादपि कथमभिधेयविशेषाभावानां निवृत्तिस्तेषां कल्पितत्वाभावादिति चेत् न, अभिधेयस्य शब्दनयोपकल्पितत्वाद्विशेषस्य ऋजुसूत्रोपकल्पितत्वादभावस्य च धनप्रयोजनवत्कल्पितत्वसिद्धेस्तावन्मात्रस्य सकलवस्तुत्वाभावाद्वस्त्वेकदेशतया स्थितत्वात्। तत्त्वश्रद्धानमित्यस्तु लघुत्वादतिव्याप्त्यव्याप्त्योरसंभवादित्यपरः। सोपि न परानुग्रहबुद्धिस्तत्त्वशब्दार्थे संदेहात्। तत्त्वमिति श्रद्धानं तत्त्वस्य वा तत्त्वे वा तत्त्वेन वेत्यादिपक्षः सभवेत् कचिन्निर्णयानुपपत्तेः। न हि तत्त्वमिति श्रद्धानं तत्त्वश्रद्धानमित्ययं पक्षः श्रेयान् "पुरुष एवेदं सर्वं नेह नानास्ति किंचन" इति सर्वैकत्वस्य तत्त्वस्य, ज्ञानाद्वैतादेर्वा श्रद्धानप्रसगात्। नापि तत्त्वस्य तत्त्वे तत्त्वेन वा श्रद्धानमिति पक्षाः संगच्छंते कस्य कस्मिन् वेति प्रश्नाविनिवृत्ते। तत्त्वविशेषणे त्वर्थे श्रद्धानस्य न किंचिदवद्यं दर्शनमोहरहितस्य पुरुषस्वरूपस्य वा तत्त्वार्थश्रद्धानशब्देनाभिधानात्. सरागवीतरागसम्यग्दर्शनयोस्तस्य सद्भावादव्याप्तेः स्फुट विध्वंसनात्। कथ तर्हि तत्त्वेनार्थो विशेष्यते? इत्युच्यते;—

**यत्त्वेनावस्थितो भावस्तत्त्वेनैवार्यमाणकः। तत्त्वार्थः सकलोन्यस्तु मिथ्यार्थ इति गम्यते॥ ५॥**

तदिति सामान्याभिधायिनी प्रकृतिः सर्वनामत्वात्, तदपेक्षत्वात्प्रत्ययार्थस्य भावसामान्यसंप्रत्ययस्तत्त्ववचनात्, तस्य भावस्तत्त्वमिति, न तु गुणादिसंप्रत्ययस्तदनपेक्षत्वात् प्रत्ययार्थस्य। तत्र तत्त्वेनार्यमाणस्तत्त्वार्थ इत्युक्ते सामर्थ्याद्गम्यते यत्त्वेनावस्थित इति, यत्तदोर्नित्यसबंधात्। तेनैतदुक्तं भवति, यत्त्वेन जीवादित्वेनावस्थितः प्रमाणनयैर्भावस्तत्त्वेनैवार्यमाणस्तत्त्वार्थः सकलो जीवादिर्न पुनस्तदंशमात्रमुपकल्पितं कुतश्चिदिति। ततोन्यस्तु सर्वथैकातवादिभिरभिमन्यमानो मिथ्यार्थस्तस्य प्रमाणनयैस्तथार्यमाणत्वाभावादिति स्वयं प्रेक्षावद्भिर्गम्यते किं नश्चितया॥

**मोहारेकाविपर्यासविच्छेदात्तत्र दर्शनम्। सम्यगित्यभिधानात्तु ज्ञानमप्येवमीरितम्॥ ६॥**

तत्र तत्त्वार्थे कस्यचिदव्युत्पत्तिर्मोहोध्यवसायापाय इति यावत्। चलिता प्रतिपत्तिरारेका, किमयं जीवादिः किमित्थमिति वा धर्मिणि धर्मे वा कचिदवस्थानाभावात्। अतस्मिंस्तदध्यवसायो विपर्यासः। इति सक्षेपतस्त्रिविधमिथ्यादर्शनव्यवच्छेदादुपजायमान सम्यगिति विज्ञापयते ज्ञानमप्येवमेव सम्यगिति निवेदितं, तस्य मोहादिव्यवच्छेदेन तत्त्वार्थाध्यवसायस्य व्यवस्थापनात्। तर्हि सूत्रकारेण सम्यग्ज्ञानस्य लक्षणं कस्माद्भेदेन नोक्तम्?—

**सामर्थ्यादादिसूत्रे तन्निरुक्त्या लक्षितं यतः। चारित्रवत्ततो नोक्तं ज्ञानादेर्लक्षणं पृथक् ॥७॥**
**यथा पावकशब्दस्योच्चारणात् संप्रतीयते। तदर्थलक्षणं तद्वज्ज्ञानचारित्रशब्दनात् ॥ ८ ॥**
**ज्ञानादिलक्षणं तस्य सिद्धेर्यत्नांतरं वृथा। शब्दार्थाव्यभिचारेण न पृथग्लक्षणं क्वचित् ॥ ९ ॥**

नन्वेवं मत्यादीनां पृथग्लक्षणसूत्रं वक्तव्यं शब्दार्थव्यभिचारादिति न चोद्यं, कारणादिविशेषसूत्रैस्त-दर्थव्यभिचारस्य परिहृतत्वात्। सम्यग्दर्शनस्य लक्षणसूत्रमनर्थकमेव स्यात् कारणविशेषसूत्रादेव तच्छ-ब्दार्थस्य व्यभिचारपरिहरणादिति चेन्न, निसर्गाधिगमकारणविशेषस्य प्रशस्तालोचनेपि भावाद्व्यभिचारस्य तदवस्थानात्। न हि परोपदेशनिरपेक्षं निसर्गजं प्रशस्तालोचनं न संभवति परोपदेशापेक्षं वाधिगमजं प्रशस्तालोचनवदिति युक्तं सम्यग्दर्शनस्य पृथग्लक्षणवचनं शब्दार्थव्यभिचारात्, तदव्यभिचारे तद्वचनान्यस्य मत्यादेर्ज्ञानचारित्रवदेव ॥

**इच्छा श्रद्धानमित्येके तदयुक्तममोहिनः। श्रद्धानविरहाशक्तेर्ज्ञानचारित्रहानितः ॥ १० ॥**

न ह्यमोहानामिच्छास्ति तस्य मोहकार्यत्वादन्यथा मुक्तात्मनामपि तद्भावप्रसंगात्। हेयोपादेययोर्जिहा-सोपादित्सा च विशिष्टा श्रद्धा वीतमोहस्यापि संभवति तस्या मनःकार्यत्वादिति चेन्न, तस्या मनस्कार्यत्वे सर्वमनस्विना तद्भावानुषंगात्। ज्ञानापेक्षं मनः कारणमिच्छाया इति चेन्न, केषांचिन्मिथ्याज्ञानभावे-प्युदासीनदशायां हेयेषूपादित्सानवलोकनात् उपादेयेषु च जिहासाननुभावात्, परेषां सम्यग्ज्ञानसद्भावेपि हेयोपादेयजिहासोपादित्साविरहात्। विषयविशेषापेक्षान्मनसस्तदिच्छाप्रभव इत्यपि न युक्त, तदभावेपि कस्यचिदिच्छोत्पत्तेस्तद्भावेपि चेच्छानुद्भवात्। कालादयोनेनैवेच्छाहेतवो विध्वस्ताः, तेषां सर्वकार्य-साधारणकारणत्वाच्च नेच्छाविशेषकारणत्वनियमः। स्वोत्पत्तावदृष्टविशेषादिच्छाविशेष इति चेत्, भावादृष्टविशेषाद् द्रव्यादृष्टविशेषाद्वा? प्रथमकल्पनायां न तावत्साक्षात् भावादृष्टस्यात्मपरिणामस्येच्छा-व्यभिचारित्वात्। परंपरया चेत्तर्हि द्रव्यादृष्टादेव साक्षादिच्छोत्पत्तिस्तच्च द्रव्यादृष्टं मोहनीयाख्यं कर्म पौद्गलिकमात्मपारतंत्र्यहेतुत्वादुन्मत्तकरसादिवदिति मोहकार्यमिच्छा कथममोहानामुद्भवेत्? यतस्तल्लक्षणं श्रद्धानं सम्यग्दर्शनं तेषां स्यात्। तदभावे न सम्यग्ज्ञानं तत्पूर्वकं वा सम्यक्चारित्रमिति क्षीणमोहानां रत्नत्रयापायान्मुक्त्यपायः प्रसज्येत। ततस्तेषां तद्व्यवस्थामिच्छता नेच्छा श्रद्धानं वक्तव्यम् ॥

**निर्देशाल्पबहुत्वादिचिंतनस्याविरोधतः। श्रद्धाने जीवरूपेस्मिन्न दोषः कश्चिदीक्ष्यते ॥ ११ ॥**

न हि निर्देशादयो दर्शनमोहरहितजीवस्वरूपे श्रद्धाने विरुध्यंते तथैव निर्देशादिसूत्रे विवरणात्, नाप्यल्पबहुत्वसंख्याभेदांतरभावाः पुरुषपरिणामस्य नानात्वसिद्धेः। पुरुषरूपस्यैकत्वात् तत्र तद्विरोध एवेति चेन्न, दर्शनमोहोपशमादिभेदापेक्षस्य तस्यैकत्वायोगात्। अन्यथा सर्वस्यैकत्वापत्तिः कारणादिभेद-स्याभेदकत्वात्, क्वचित्तस्य भेदकत्वे वा सिद्धः पुरुषस्य स्वभावभेदः। इति जीवद्रव्याद्भेदेन निर्देशादयस्तत्र साधीयांसोल्पबहुत्वादिवदिति वक्ष्यते। कर्मरूपत्वेपि श्रद्धानस्य तदविरोध इति चेन्न, तस्य मोक्षकारण-त्वाभावात्, स्वपरिणामस्यैव तत्कारणत्वोपपत्तेः। कर्मणोपि मुक्तिकारणत्वमविरुद्धं स्वपरनिमित्तत्वान्मोक्ष-स्येति चेन्न, कर्मणोन्यस्यैव कालादेः परनिमित्तस्य सद्भावात्। ननु च यथा मोक्षो जीवकर्मणोः परिणा-मस्तस्य द्विष्ठत्वात्, तथा मोक्षकारणश्रद्धानमपि तदुभयविवर्तरूपं भवत्विति चेन्न, मोक्षावस्थायां तदभाव-प्रसंगात्, स्वपरिणामिनोऽसत्त्वे परिणामस्याघटनात्, पुरुषपरिणामादेव च कर्मसामर्थ्यहननात्तस्य कर्मरूप-

१ "तदिन्द्रियानिन्द्रियनिमित्तम्" इत्यादिकारणसूत्राणि मत्यादेः। २ साक्षादात्मपरिणामस्येच्छा न। कुतः? व्यभि-चारात्। यतो नह्यात्मनः सर्वदा इच्छा।

त्वायोगात् । ततो न कर्मरूपं सम्यग्दर्शनं निःश्रेयसप्रधानकारणत्वादहेयत्वात्सम्यग्ज्ञानवत् । निःश्रेयसस्य प्रधानं कारणं सम्यग्दर्शनमसाधारणस्वधर्मत्वात्तद्वत् । असाधारणः स्वधर्मः सद्दर्शनं मुक्तियोग्यस्य ततोन्यस्यासंभवात्तद्वत् । इति जीवरूपे श्रद्धाने सद्दर्शनस्य लक्षणे न कश्चिद्दोषोसंभवोतिव्याप्तिरव्याप्तिर्वा समीक्ष्यते ॥

**सरागे वीतरागे च तस्य संभवतोंजसा । प्रशमादेरभिव्यक्तिः शुद्धिमात्राच्च चेतसः ॥ १२ ॥**

यथैव हि विशिष्टात्मस्वरूपं श्रद्धानं सरागेषु संभवति तथा वीतरागेष्वपीति तस्याव्याप्तिरपि दोषो न शंकनीयः । कुतस्तत्र तस्याभिव्यक्तिरिति चेत्, प्रशमसंवेगानुकंपास्तिक्येभ्यः सरागेषु सद्दर्शनस्य वीतरागेष्वात्मविशुद्धिमात्रादित्याचक्षते । तत्रानंतानुबंधिनां रागादीनां मिथ्यात्वसम्यग्मिथ्यात्वयोश्चानुद्रेकः प्रशमः । द्रव्यक्षेत्रकालभवभावपरिवर्तनरूपात् संसाराद्भीरुता संवेगः । त्रसस्थावरेषु प्राणिषु दयानुकंपा । जीवादितत्त्वार्थेषु युक्त्यागमाभ्यामविरुद्धेषु याथात्म्योपगमनमास्तिक्यं । एतानि प्रत्येकं समुदितानि वा स्वस्मिन् स्वसंविदितानि, परत्र कायवाग्व्यवहारविशेषलिंगानुमितानि सरागसम्यग्दर्शनं ज्ञापयंति, तदभावे मिथ्यादृष्टिष्वसंभवित्वात्, संभवे वा मिथ्यात्वायोगात् । मिथ्यादृशामपि केषांचित्क्रोधाद्यनुद्रेकदर्शनात् प्रशमोऽनैकांतिक इति चेन्न, तेषामपि सर्वथैकांतेऽनंतानुबंधिनो मानस्योदयात् । स्वात्मनि चानेकांतात्मनि द्वेषोदयस्यावश्यंभावात् पृथिवीकायिकादिषु प्राणिषु हननदर्शनाच्च । एतेन संवेगानुकंपयोर्मिथ्यादृष्टिष्वसंभवकथनादनैकांतिकता हता, संविग्नस्यानुकंपावतो वा निःशंकप्राणिघाते प्रवृत्त्यनुपपत्तेः । सद्दृष्टेरप्यज्ञानात्तत्र तथा प्रवृत्तिरिति चेत्, व्याहतमिदं 'सद्दृष्टिश्च जीवतत्त्वानभिज्ञश्चे'ति तदज्ञानस्यैव मिथ्यात्वविशेषरूपत्वात् । परेषामपि स्वाभिमततत्त्वेष्वास्तिक्यस्य भावादनैकांतिकत्वमिति चेत् न, सर्वथैकांततत्त्वानां दृष्टेष्टबाधितत्वेन व्यवस्थानायोगादेकांतवादिनां भगवदर्हत्स्याद्वादश्रद्धानविधुराणां नास्तिकत्वनिर्णयात् । तदुक्तं । "त्वन्मतामृतबाह्यानां सर्वथैकांतवादिनाम् । आत्माभिमानदग्धानां स्वेष्टं दृष्टेन बाध्यते" इति । तदनेन प्रशमादिसमुदायस्यानैकांतिकत्वोद्भावनं प्रतिक्षिप्तं । ननु प्रशमादयो यदि स्वस्मिन् स्वसंवेद्याः श्रद्धानमपि तत्त्वार्थाना किन्न स्वसंवेद्यं यतस्तेभ्योनुमीयते । स्वसंवेद्यत्वाविशेषेपि तैस्तदनुमीयते न पुनस्ते तस्मादिति कः श्रद्दधीतान्यत्र परीक्षकादिति चेत्, नैतत्सारं, दर्शनमोहोपशमादिविशिष्टात्मस्वरूपस्य तत्त्वार्थश्रद्धानस्य स्वसंवेद्यत्वानिश्चयात् । स्वसंवेद्यं पुनरास्तिक्यं तदभिव्यंजकं प्रशमसंवेगानुकंपावत् कथंचित्ततो भिन्नं तत्फलत्वात् । तत एव फलतद्वतोरभेदविवक्षायामास्तिक्यमेव तत्त्वार्थश्रद्धानमिति, तस्य तद्वत्प्रत्यक्षसिद्धत्वात्तदनुमेयत्वमपि न विरुध्यते । मतांतरापेक्षया च स्वसंविदितेपि तत्त्वार्थश्रद्धाने विप्रतिपत्तिसद्भावात्तन्निराकरणाय तत्र प्रशमादिलिंगादनुमाने दोषाभावः । सम्यग्ज्ञानमेव हि सम्यग्दर्शनमिति हि केचिद्विप्रवदंते तान् प्रति ज्ञानात् भेदेन दर्शनं प्रशमादिभिः कार्यविशेषैः प्रकाश्यते । ज्ञानकार्यत्वात्तेषां न तत्प्रकाशकत्वमिति चेन्न, अज्ञाननिवृत्तिफलत्वात् ज्ञानस्य । साक्षादज्ञाननिवृत्तिर्ज्ञानस्य फलं, परंपरया प्रशमादयो हानादिबुद्धिवदिति चेत्, तर्हि हानादिबुद्धिवदेव ज्ञानादुत्तरकालं प्रशमादयोऽनुभूयेरन्, न चैवं ज्ञानसमकालं प्रशमाद्यनुभवनात् । पूर्वज्ञानफलत्वात् प्रशमादेः सांप्रतिकज्ञानसमकालतयानुभवनमिति चेत्, तर्हि पूर्वज्ञानसमकालवर्तिनोपि प्रशमादेस्तत्पूर्वज्ञानफलत्वेन भवितव्यमित्यनादित्वप्रसक्तिरवितथा ज्ञानस्य । सम्यग्दर्शनसमसमयमनुभूयमानत्वात् प्रशमादेस्तत्फलत्वमपि मा भूत् इति चेन्न, तस्य तदभिन्नफलत्वोपगमात्तत्समसमयवृत्तित्वाविरोधात् । ततो दर्शनकार्यत्वाद्दर्शनस्य ज्ञापकाः प्रशमादयः सहचरकार्यत्वात्तु ज्ञानस्येत्यनवद्यं । परत्र प्रशमादयः

१ एकान्तात्मकेभिमते साधु मे मतमित्याकारकस्यानंतानुबंधिनो मानस्येत्यर्थः । २ परस्मिन् पुरुषे ।

संदिग्धासिद्धत्वान्न सद्दर्शनस्य गमका इति चेन्न, कायवाग्व्यवहारविशेषेभ्यस्तेषां तत्र सद्भावनिर्णयस्योक्तत्वात् । तेषां तद्व्यभिचारान्न तत्सद्भावनिर्णयहेतुत्वमिति चेन्न, सुपरीक्षितानामव्यभिचारात् । सुपरीक्षितं हि कार्यं कारणं गमयति नान्यथा । यदि पुनरतीन्द्रियत्वात् परप्रशमादीनां तद्भावे कायादिव्यवहारविशेषसद्भावोऽशक्यो निश्चेतुमिति मतिः, तदा तदभावे तद्भाव इति कथं निश्चीयते ? तत एव संशयोस्त्विति चेन्न, तस्य क्वचित्कदाचिन्निर्णयमंतरेणानुपपत्तेः स्थाणुपुरुषसंशयवत् । स्वसंताने निर्णयोस्तीति चेत्, तर्हि यादृशाः प्रशमादिषु सत्सु कायादिव्यवहारविशेषाः स्वस्मिन्निर्णीतास्तादृशाः परत्रापि तेषु सत्स्वेवेति निर्णीयतां । यादृशास्तु तेष्वसत्सु प्रतीतास्तादृशाः तदभावस्य गमकाः कथं न स्युः ? संशयितस्वभावास्तु तत्संशयहेतव इति युक्तं वक्तुं । नन्वेवं यथा सरागेषु तत्त्वार्थश्रद्धानं प्रशमादिभिरनुमीयते तथा वीतरागेष्वपि तत्तैः किं नानुमीयते ? इति चेन्न, तस्य स्वस्मिन्नात्मविशुद्धिमात्रत्वात् सकलमोहाभावे समारोपानवतारात् स्वसंवेदनादेव निश्चयोपपत्तेरनुमेयत्वाभावः । परत्र तु प्रशमादीनां तल्लिङ्गानां सतामपि निश्चयोपायानां कायादिव्यवहारविशेषाणामपि तदुपायानामभावात् । कथमिदानीमप्रमत्तादिषु सूक्ष्मसांपरायांतेषु सद्दर्शनं प्रशमादेरनुमातुं शक्यं ? तन्निर्णयोपायानां कायादिव्यवहारविशेषाणामभावादेव । न हि तेषां कश्चिद्व्यापारोस्ति वीतरागवत्, व्यापारे वा तेषामप्रमत्तत्वादिविरोधादिति कश्चित् । सोप्यभिहितानभिज्ञः, सर्वेषु सरागेषु सद्दर्शनं प्रशमादिभिरनुमीयत इत्यनभिधानात्, यथासंभवं सरागेषु वीतरागेषु च सद्दर्शनस्य तदनुमेयत्वमात्मविशुद्धिमात्रत्वं चेत्यभिहितत्वात् । तत एव सयोगकेवलिनो वाग्व्यवहारविशेषदर्शनात् सूक्ष्माद्यर्थविज्ञानानुमानं न विरुध्यते ।

**प्रधानस्य विवर्तोऽयं श्रद्धानाख्य इतीतरे । तदसत्पुंसि सम्यक्त्वभावासंगात्ततो परे ॥ १३ ॥**

न हि प्रधानस्य परिणामः श्रद्धानं ततोऽपरस्मिन् पुरुषे सम्यक्त्वमिति युक्तं लक्ष्यलक्षणयोर्भिन्नाश्रयत्वविरोधादग्न्युष्णत्ववत् ॥

**प्रधानस्यैव सम्यक्त्वाच्चैतन्यं सम्यगिष्यते । बुद्ध्यध्यवसितार्थस्य पुंसा संचेतनाद्यदि ॥ १४ ॥**
**तदाहंकारसम्यक्त्वात् बुद्धेः सम्यक्त्वमश्नुते । अहंकारास्पदार्थस्य तथाप्यध्यवसानतः ॥ १५ ॥**
**मनःसम्यक्त्वतः सम्यगहंकारस्तथा न किम् । मनःसंकल्पितार्थेषु तत्प्रवृत्तिप्रकल्पनात् ॥१६॥**
**तथैवेंद्रियसम्यक्त्वान्मनः सम्यगुपेयताम् । इंद्रियालोचितार्थेषु मनःसंकल्पनोदयात् ॥ १७ ॥**
**इंद्रियाणि च सम्यञ्चि भवंतु परतस्तव । स्वाभिव्यंजकसम्यक्त्वादिभिः सम्यक्त्वतः किमु १८**
**अर्थस्वव्यंजकाधीनं मुख्यं सम्यक्त्वमिष्यते । इंद्रियादिषु तद्वत्स्यात् पुंसि तत्परमार्थतः ॥१९॥**

एवं प्रधानसम्यक्त्वाच्चैतन्यसम्यक्त्वेऽभ्युपगम्यमानेऽतिप्रसंजनमुक्तं । तत्त्वतस्तु—

**न च प्रधानधर्मत्वं श्रद्धानस्य चिदात्मनः । चैतन्यस्यैव संसिद्ध्येदन्यथा स्याद्विपर्ययः ॥२०॥**

चिदात्मकत्वमसिद्धं श्रद्धानस्येति चेन्न, तस्य स्वसंवेदनतः प्रसिद्धेर्ज्ञानवत् । साधितं ज्ञानादीनां चेतनात्मकत्वं पुरस्तात् ॥

**न श्रद्धत्ते प्रधानं वा जडत्वात्कलशादिवत् । प्रतीत्याश्रयणे त्वात्मा श्रद्धातास्तु निराकुलम् ॥२१**

न हि श्रद्धाताहमिति प्रतीतिरचेतनस्य प्रधानस्य जातुचित्संभाव्यते कलशादिवत् । यतोयमात्मैव श्रद्धाता निराकुलं न स्यात् । भ्रांतेयमात्मनि प्रतीतिरिति चेन्न, बाधकाभावात् । नात्मधर्मः श्रद्धानं भंगुरत्वाद्घटवदित्यपि न तद्बाधकं, ज्ञानेन व्यभिचारित्वात् । न च ज्ञानस्यानात्मधर्मत्वं युक्तमात्मधर्मत्वेन प्रसाधितत्वात् । ततः सूक्तमात्मस्वरूपं दर्शनमोहरहितं तत्त्वार्थश्रद्धानं सम्यग्दर्शनस्य लक्षणमिति ॥

**न सम्यग्दर्शनं नित्यं नापि तन्नित्यहेतुकम् । नाहेतुकमिति प्राह द्विधा तज्जन्मकारणम् ॥—**

## तन्निसर्गादधिगमाद्वा ॥ ३ ॥

उत्पद्यत इति क्रियाध्याहारान्न नित्यं सम्यग्दर्शनं ज्ञायत इति । नोत्पद्यत इति क्रियाध्याहारान्नित्यं तदिति चेत्, द्रव्यतः पर्यायतो वा ? द्रव्यतश्चेत् सिद्धसाध्यता । पर्यायतस्तु तस्य नित्यत्वे सततसंवेदनप्रसंगः । नित्यं तदनंतत्वाज्जीवद्रव्यवदिति चेत् न, केवलज्ञानादिभिर्व्यभिचारात् । तेषामपि पक्षीकरणे मोक्षस्य नित्यत्वप्रसक्तेः क्व संसारानुभवः ? न च मोक्षकारणस्य सम्यग्दर्शनादित्रयात्मकस्यानित्यत्वेपि मोक्षस्यानित्यत्वमुपपद्यते, मोक्षस्यानंतत्वेपि च सादित्वे सम्यक्त्वादीनामनंतत्वेपि सादित्वं कथं न भवेत् ? ततो नोत्पद्यत इति क्रियाध्याहारविरोधः । एतेनाहेतुकं सद्दर्शनमिति निरस्तं । नित्यहेतुकं तदित्यप्ययुक्तं, मिथ्यादर्शनस्यास्वसद्भावप्रसंगात् तत्कारणस्य सद्दर्शनकारणे विरोधिनि सर्वदा सति संभवादनुपपत्तेः येन च तन्नित्यं नापि नित्यहेतुकं नाहेतुकं ।

**तेन नानादिता तस्य सर्वदोत्पत्तिरेव वा । नित्यं तत्सत्त्वसंबद्धान्प्रसज्येताविशेषतः ॥ १ ॥**

ननु च मिथ्यादर्शनस्य नित्यत्वाभावेपि नानादित्वव्यवच्छेदो दृष्ट इति चेन्न, तस्यानादिकारणत्वात् । न च तत्कारणस्यानादित्वान्नित्यत्वप्रसक्तिः संतानापेक्षयानादित्ववचनात्, पर्यायापेक्षया तस्यापि सादित्वात् । तस्यानाद्यनंतत्वे वा सर्वदा मोक्षस्याभावापत्तेः । नित्यहेत्वहेतुकत्वाभावे सर्वदोत्पत्तिव्यवच्छेदोनुपपन्नः केषांचित्संसारस्य तादृशत्वेपि सर्वदोत्पत्तिदर्शनादिति चेन्न, तस्य नित्यहेतुसंतानत्वात् । प्रागभावस्याहेतुकत्वेपि नित्यत्वसत्त्वयोरदर्शनान्नाहेतुकस्य सम्यग्दर्शनस्य तत्प्रसंगो येन तन्निवृत्तये तस्य सद्धेतुकत्वमुच्यते इति चेन्न, प्रागभावस्याहेतुकत्वासिद्धेः । स हि घटोत्पत्तेः प्राक् तद्विविक्तपर्यायपरंपरारूपो वा द्रव्यमात्ररूपो वा ? प्रथमपक्षे पूर्वपूर्वपर्यायादुत्पत्तेः कथमसौ कार्योत्पत्तिपूर्वकालभावी पर्यायकलापोऽहेतुको नाम यतः कार्यजन्मनि तस्यासत्त्वं पूर्वं सतोपि विरुध्यते तदा वाऽसत्त्वेपि पूर्वं सत्त्वं न घटते । द्वितीयपक्षे तु यथा प्रागभावस्याहेतुकत्वं तथा नित्यं सत्त्वमपि द्रव्यमात्रस्य कदाचिदसत्त्वायोगात् । कार्योत्पत्तौ कार्यरहितत्वेन प्राच्येन रूपेण द्रव्यमसदेवेति चेत्, नन्वेवं कार्यरहितत्वमेव विशेषणमसन्न पुनर्द्रव्यं तस्य तन्मात्रस्वरूपत्वाभावात् । तुच्छः प्रागभावो न भावस्वभाव इति चायुक्तं, तस्य कार्योत्पत्तेः पूर्वमेव सत्त्वविरोधात् कार्यकाले वा सत्त्वायोगात्, सत्त्वासत्त्वविशेषणयोर्भावाश्रयत्वदर्शनात् । तथा च न प्रागभावस्तुच्छः सत्त्वासत्त्वविशेषणाश्रयत्वाद् द्रव्यादिवत् विपर्ययप्रसंगो वा विशेषाभावात् । कदाचित्सत्त्वमसत्त्वं च विशेषणमुपचारात्प्रागभावस्येति चेत्, तर्हि न तत्त्वतः कदाचित्सत्त्वं पुनरसत्त्वमहेतुकस्यापि भवतीति सर्वदा सत्त्वस्यासत्त्वस्य वा निवृत्तये सद्दर्शनस्याहेतुकत्वं व्यवच्छेत्तव्यमेव नित्यत्वनित्यहेतुकत्ववत् ॥

**निसर्गादिति निर्देशो हेतावधिगमादिति । तच्छब्देन परामृष्टं सम्यग्दर्शनमात्रकम् ॥ २ ॥**

सूत्रेस्मिन्निसर्गादिति निर्देशोधिगमादिति च हेतौ भवन् सम्यग्दर्शनमात्रपरामर्शित्वं तच्छब्दस्य ज्ञापयति तदुत्पत्तावेव तयोर्हेतुत्वघटनात्, ज्ञानचारित्रोत्पत्तौ तयोर्हेतुत्वे सिद्धांतविरोधान्न मार्गपरामर्शित्वमुपपन्नं । सम्यग्ज्ञानं हि निसर्गादेरुत्पद्यमानं निःशेषविषयं नियतविषयं वा ? न तावदादिविकल्पः केवलस्य सकलश्रुतपूर्वकत्वोपदेशान्निसर्गजत्वविरोधात् । सकलश्रुतज्ञानं निसर्गादुत्पद्यत इत्यप्यसिद्धं, परोपदेशाभावे तस्यानुपपत्तेः । स्वयंबुद्धश्रुतज्ञानमपरोपदेशमिति चेन्न, तस्य जन्मान्तरोपदेशपूर्वकत्वात् तज्जन्मापेक्षया स्वयंबुद्धत्वस्याविरोधात् । देशविषयं मत्यवधिमनःपर्ययज्ञानं निसर्गादेरुत्पद्यत

इति द्वितीयविकल्पोपि न श्रेयान् तस्याधिगमजत्वासंभवात् द्विविधहेतुकत्वाघटनात् । किंचिन्निसर्गादपरमधिगमादुत्पद्यत इति ज्ञानसामान्य द्विविधहेतुकं घटत एवेति चेत् न, दर्शनेपि तथा प्रसंगात् । न चैतद्युक्तं प्रतिव्यक्ति तस्य द्विविधहेतुकत्वप्रसिद्धेः । यथा ह्यौपशमिकं दर्शन निसर्गादधिगमाच्चोत्पद्यते तथा क्षायोपशमिकं क्षायिकं चेति सुप्रतीतं, चारित्र पुनरधिगमजमेव तस्य श्रुतपूर्वकत्वात्त द्विशेषस्यापि निसर्गजत्वाभावान्न द्विविधहेतुकत्वं संभवतीति न त्रयात्मको मार्गः संबध्यते, अत्र दर्शनमात्रस्यैव निसर्गादधिगमाद्वोत्पत्त्यभिसंबंधघटनात् । नन्वेवं तच्छब्दोनर्थकः सामर्थ्याद्दर्शनेनात्राभिसंबंधसिद्धेरिति चेत् न, शाब्दन्यायान्मार्गेणाभिसंबधप्रसक्तेः । प्रत्यासत्तेस्ततोपि दर्शनस्यैवाभिसंबंध इति चेन्न, मार्गस्य प्रधानत्वाद्दर्शनस्यास्य तदवयवत्वेन गुणभूतत्वात्, प्रत्यासत्तेः प्रधानस्य बलीयस्त्वात्, सन्निकृष्टविप्रकृष्टयोः सन्निकृष्टे संप्रत्यय इत्येतस्य गौणमुख्ययोर्मुख्ये संप्रत्यय इत्यनेनापोहितत्वात् सार्थक एव तच्छब्दो मार्गाभिसंबंधपरिहारार्थत्वात् । ननु च दर्शनवन्मार्गस्यापि पूर्वप्रक्रांतत्वप्रतीतेः तच्छब्दस्य च पूर्वप्रक्रांतपरामर्शित्वात् कथ शाब्दन्यायाद्दर्शनस्यैवाभिसबधो न तु मार्गस्येति चेत् न, अस्मात्सूत्राद्दर्शनस्य मुख्यतः पूर्वप्रक्रातत्वात्परामर्शोपपत्ते मार्गस्य पूर्वप्रक्रातत्वादुपचारेण तथा भावात् परामर्शाघटनात् । तदिति नपुसकलिंगस्यैकस्य निर्देशाच्च न मार्गस्य पुल्लिंगस्य परामर्शो नापि बहूनां सम्यग्दर्शनज्ञानचारित्राणामिति शाब्दान्न्यायादार्थादिव सद्दर्शन तच्छब्देन परामृष्टमुन्नीयते । कः पुनरयं निसर्गोधिगमो वा यस्मात्तदुत्पद्यत ? इत्याह,—

**विना परोपदेशेन तत्त्वार्थप्रतिभासनम् । निसर्गोधिगमस्तेन कृतं तदिति निश्चयः ॥ ३ ॥**
**ततो नाप्रतिभातेर्थे श्रद्धानमनुपज्यते । नापि सर्वस्य तस्येह प्रत्ययोधिगमो भवेत् ॥ ४ ॥**

न हि निसर्गः स्वभावो येन तत सम्यग्दर्शनमुत्पद्यमानमनुपलब्धतत्त्वार्थगोचरतया रसायनवन्नोपपद्येत । न परोपदेशनिरपेक्षे ज्ञाने निसर्गशब्दस्य प्रवर्तनान्निसर्गतः शूरः सिंह इति यथा स्वकारणविशेषादभवदपि हि तस्य शौर्यं परोपदेशानपेक्षं लोके नैसर्गिक प्रसिद्ध तद्वत्तत्त्वार्थश्रद्धानमपरोपदेशमत्यादिज्ञानाधिगते तत्त्वार्थे भवन्निसर्गान्न विरुध्यते । नन्वेवं मत्यादिज्ञानस्य दर्शनेन सहोत्पत्तिर्विहन्यते तस्य ततः प्रागपि भावादिति चेन्न, सम्यग्दर्शनोत्पादनयोग्यस्य मत्यज्ञानादेर्मतिज्ञानादिव्यपदेशाद्दर्शनसमकालं मत्यादिज्ञानोत्पत्तेः । तर्हि मिथ्याज्ञानाधिगतेर्थे दर्शनं मिथ्या प्रसक्तमिति चेन्न, ज्ञानस्यापि मिथ्यात्वप्रसंगात् । सत्यज्ञानस्यापूर्वार्थत्वान्न मिथ्याज्ञानाधिगतेर्थे प्रवृत्तिरिति चेन्न, सर्वेषां सत्यज्ञानसंतानस्यानादित्वप्रसंगात् । सत्यज्ञानात् प्राक् तदर्थे मिथ्याज्ञानवत्सत्यज्ञानस्याप्यभावान्न तस्यानादित्वप्रसक्तिरिति चेन्न, सर्वज्ञानशून्यस्य प्रमातुरनात्मत्वप्रसंगात् । न चानात्मा प्रमाता युक्तोतिप्रसगात् । सत्यज्ञानात्पूर्वं तद्विषये ज्ञानं न मिथ्या सत्यज्ञानजननयोग्यत्वात, नापि सत्य पदार्थयाथात्म्यपरिच्छेदकत्वाभावात् । किं तर्हि ? सत्येतरज्ञानविविक्तं ज्ञानसामान्यं, ततो न तेनाधिगतेर्थे प्रवर्तमानं सत्यज्ञानं मिथ्याज्ञानं मिथ्याज्ञानाधिगतविषयस्य ग्राहकं नापि गृहीतग्राहीति चेत्, तर्हि कथंचिदपूर्वार्थं सत्यज्ञानं न सर्वथेत्यायातं । तथोपगमे सम्यग्दर्शनं तथैवोपगम्यमानं कथं मिथ्याज्ञानाधिगतार्थे स्यात् ? सत्यज्ञानपूर्वकं वा ? यतस्तत्समकालं मतिज्ञानाद्युपगमविरोधः । सर्वं सद्दर्शनमधिगमजमेव ज्ञानमात्राधिगते प्रवर्तमानत्वादिति चेन्न, परोपदेशापेक्षस्य तत्त्वार्थज्ञानस्याधिगमशब्देनाभिधानात् । नन्वेवमितरेतराश्रयः सति सम्यग्दर्शने परोपदेशपूर्वकं तत्त्वार्थज्ञानं तस्मिन् सति सम्यग्दर्शनमिति चेन्न, उपदेष्टृज्ञानापेक्षया तथाभिधानादित्येके समादधते । तेपि न युक्तवादिनः । परोपदेशापेक्षत्वाभावादुपदेष्टृज्ञानस्य, स्वयंबुद्धस्योपदेष्टृत्वात्, प्रति-

पाद्यस्यैव परोपदेशापेक्षतत्त्वार्थज्ञानस्य संभवात् । यदैव प्रतिपाद्यस्य परोपदेशात्तत्त्वार्थज्ञानं तदैव सम्यग्दर्शनं तयोः सहचारित्वात् ततो नेतरेतराश्रय इत्यन्ये । तेपि न प्रकृतज्ञाः । सद्दर्शनजनकस्य परोपदेशापेक्षत्वात् तत्त्वार्थज्ञानस्य प्रकृतत्वात् तस्य तत्सहचारित्वाभावात् सहचारिणस्तदजनकत्वात् परोपदेशापेक्षस्य तत्त्वार्थज्ञानस्य सम्यग्दर्शनजननयोग्यस्य परोपदेशानपेक्षतत्त्वार्थज्ञानवत्सम्यग्दर्शनात्पूर्वं स्वकारणादुत्पत्तेर्नेतरेतराश्रयणमित्यपरे, सकलचोद्यानामसंभवादागमाविरोधात् । सर्वं सम्यग्दर्शनं स्वाभाविकमेव स्वकाले स्वयमुत्पत्तेर्निःश्रेयसवदिति चेन्न, हेतोरसिद्धत्वात् । सर्वथा ज्ञानमात्रेणाप्यनधिगतेर्थे श्रद्धानस्याप्रसिद्धेः । वेदार्थे शूद्रवत्तत्स्यादिति चेन्न, भारतादिश्रवणाधिगते शूद्रस्य तस्मिन्नेव श्रद्धानदर्शनात् । न प्रत्यक्षतः स्वयमधिगते मणौ प्रभावादिना संभवानुमानान्निर्णीते कस्यचिद्भक्तिसंभवादन्यथा तदयोगात् । साध्यसाधनविकलत्वाच्च दृष्टांतस्य न स्वाभाविकत्वसाधनं दर्शनस्य साधीयः । न हि स्वाभाविकं निःश्रेयसं तत्त्वज्ञानादिकतदुपायानर्थकत्वापत्तेः । नापि स्वकाले स्वयमुत्पत्तिस्तस्य युक्ता तत एव । केचित्संख्यातेन कालेन सेत्स्यंति भव्याः केचिदसंख्यातेन, केचिदनंतेन, केचिदनंतानंतेनापि कालेन न सेत्स्यंतीत्यागमान्निःश्रेयसस्य स्वकाले स्वयमुत्पत्तिरिति चेत् न, आगमस्यैवंपरत्वाभावात् । सम्यग्दर्शनज्ञानचारित्रात्मीभावे सति संख्यातादिना कालेन सेत्स्यंतीत्येवमर्थतया तस्य निश्चितत्वात्, दर्शनमोहोपशमादिजन्यत्वाच्च न दर्शनं स्वकालेनैव जन्यते यतः स्वाभाविकं स्यात् ॥

**अंतर्दर्शनमोहस्य भव्यस्योपशमे सति । तत्क्षयोपशमे वापि क्षये वा दर्शनोद्भवः ॥ ५ ॥**
**बहिः कारणसाकल्येप्यस्योत्पत्तेरपीक्षणात् । कदाचिदन्यथा तस्यानुपपत्तेरिति स्फुटम् ॥ ६ ॥**

ततो न स्वाभाविकोस्ति विपरीतग्रहक्षयः स्याद्वादिनामिवान्येषामपि तथानभ्युपगमात् ॥

**पापापायाद्भवत्येष विपरीतग्रहक्षयः । पुंसो धर्मविशेषाद्वेत्यन्ये संप्रतिपेदिरे ॥ ७ ॥**

ननु च यदि दर्शनमोहस्योपशमादिस्तत्त्वश्रद्धानस्य कारणं तदा स सर्वस्य सर्वदा तज्जनयेत् आत्मनि तस्याहेतुकत्वेन सर्वदा सद्भावात्, अन्यथा कदाचित्कस्यचिन्न जनयेत् सर्वदाप्यसत्त्वात् विशेषाभावादिति चेन्न, तस्य सहेतुकत्वात्प्रतिपक्षविशेषमंतरेणाभावात् । कथं प्रतिपक्षविशेषाद्दर्शनमोहस्योपशमादिरित्युच्यते;—

**दृग्मोहस्तु क्वचिज्जातु कस्यचिन्नुः प्रशाम्यति । प्रतिपक्ष्यविशेषस्य संपत्तेस्तिमिरादिवत् ॥ ८ ॥**
**क्षयोपशममायाति क्षयं वा तत एव सः । तद्वदेवेति तत्त्वार्थश्रद्धानं स्यात्सहेतुतः ॥ ९ ॥**

यः क्वचित् कदाचित् कस्यचिदुपशाम्यति क्षयोपशममेति क्षीयते वा स स्वप्रतिपक्षप्रकर्षमपेक्षते यथा चक्षुषि तिमिरादिः । तथा च दर्शनमोह इति नाहेतुकस्तदुपशमादिः ॥

**प्रतिपक्षविशेषोपि दृङ्मोहस्यास्ति कश्चन । जीवव्यामोहहेतुत्वादुन्मत्तकरसादिवत् ॥ १० ॥**

यो जीवव्यामोहहेतुस्तस्य प्रतिपक्षविशेषोस्ति यथोन्मत्तकरसादेः । तथा च दर्शनमोह इति न तस्य प्रतिपक्षविशेषस्य संपत्तिरसिद्धा ॥

**स च द्रव्यं भवेत् क्षेत्रं कालो भावोपि वांगिनाम् । मोहहेतुसपत्नत्वाद्विषादिप्रतिपक्षवत् ॥११॥**

मोहहेतोर्हि देहिना विषादेः प्रतिपक्षो बंध्यकर्कोट्यादि द्रव्यं प्रतीयते, तथा देवतायतनादि क्षेत्रं, कालश्च मुहूर्तादिः, भावश्च ध्यानविशेषादिस्तद्वद्दर्शनमोहस्यापि सपत्नो जिनेंद्रबिंबादि द्रव्यं, समवशरणादि क्षेत्रं, कालश्चार्धपुद्गलपरिवर्तनविशेषादिर्भावश्चाधाप्रवृत्तिकरणादिरिति निश्चीयते । तदभावे तदुपशमादिप्रतिपत्तेः, अन्यथा तदभावात् ॥

**तत्संपत्संभवो येषां ते प्रत्यासन्नमुक्तयः । भव्यास्ततः परेषां तु तत्संपत्तिर्न जातुचित् ॥१२॥**

प्रत्यासन्नमुक्तीनामेव भव्यानां दर्शनमोहप्रतिपक्षः संपद्यते नान्येषां कदाचित्कारणासन्निधानात् । इति युक्तिमानासन्नभव्यादिविभागः सद्दर्शनादिशक्त्यात्मकत्वेपि सर्वसंसारिणाम् ॥

**सम्यग्दर्शनशक्तेर्हि भेदाभावेपि देहिनाम् । संभवेतरतो भेदस्तद्व्यक्तेः कनकाश्मवत् ॥ १३ ॥**

यथा किंचित्कनकाश्मादि संभवत्कनकभावाभिव्यक्तिकमचिरादेव प्रतीयते, अपरं चिरतरेणापि कालेन संभवत्कनकभावाभिव्यक्तिकमन्यदसंभवत्कनकभावाभिव्यक्तिकं शश्वत्कनकशक्त्यात्मकत्वाविशेषेपि संभाव्यते तथा कश्चित् संसारी संभवदासन्नमुक्तिरभिव्यक्तसम्यग्दर्शनादिपरिणामः, परोनंतेनापि कालेन संभवदभिव्यक्तसद्दर्शनादिरन्यः शश्वदसंभवदभिव्यक्तसद्दर्शनादिस्तच्छक्त्यात्मकत्वाविशेषेपि संभाव्यते, इति नासन्नभव्यदूरभव्याभव्यविभागो विरुध्यते बाधकाभावात्सुखादिवत् । तत्र प्रत्यासन्ननिष्ठस्य भव्यस्य दर्शनमोहोपशमादौ सत्यंतरंगे हेतौ बहिरंगादपरोपदेशात्तत्त्वार्थज्ञानात् परोपदेशापेक्षाच्च प्रजायमानं तत्त्वार्थश्रद्धानं निसर्गजमधिगमजं च प्रत्येतव्यम् ॥

**किं तत्त्वं नाम येनार्यमाणस्तत्त्वार्थ इष्यते । इत्यशेषविवादानां निरासायाह सूत्रकृत् ॥—**

## जीवाजीवास्रवबंधसंवरनिर्जरामोक्षास्तत्त्वम् ॥ ४ ॥

तत्त्वस्य हि संख्यायां स्वरूपे च प्रवादिनो विप्रवदंते तद्विप्रतिपत्तिप्रतिषेधाय सूत्रमिदमुच्यते । तत्र जीवादिवचनात् ।

**सप्त जीवादयस्तत्त्वं न प्रकृत्यादयोऽपरे । श्रद्धानविषया ज्ञेया मुमुक्षोर्नियमादिह ॥ १ ॥**
**तथा चानंतपर्यायं द्रव्यमेकं न सूचितम् । तत्त्वं समासतो नापि तदनंतं प्रपंचतः ॥ २ ॥**
**मध्यमोक्त्यापि तद्व्यादिभेदेन बहुधा स्थितम् । नातः सप्तविधा तत्त्वाद्विनेयापेक्षितात्परम् ३**

प्रकृत्यादयः पंचविंशतिस्तत्त्वमित्यादिसंख्यांतरनिराचिकीर्षयापि संक्षेपतस्तावदेकं द्रव्यमनंतपर्यायं तत्त्वमित्येकाद्यनंतविकल्पोपायादौ तत्त्वस्य मध्यमस्थानाश्रयमपेक्ष्य विनेयस्य मध्यमाभिधानं सूरेः संक्षेपाभिधानं सुमेधसामेवानुग्रहाद्विस्तराभिधाने चिरेणापि प्रतिपत्तेरयोगात् । सर्वानुग्रहानुपपत्तिरित्येके । ते न सूत्रकाराभिप्रायविदः । सप्तानामेव जीवादीनां पदार्थानां नियमेन मुमुक्षोः श्रद्धेयत्वज्ञापनार्थत्वादुपदेशस्य मध्यमरुचिविनेयानुरोधेन तु संक्षेपेणैकं तत्त्वं प्रपंचतश्चानंतं मा भूत् सूत्रयितव्यं । मध्यमोक्त्या तु द्व्यादिभेदेन बहुप्रकारं कथनं सूत्रयितव्यं विशेषहेत्वभावात् । सप्तविधतत्त्वोपदेशे तु विशेषहेतुरवश्यं मुमुक्षोः श्रद्धातव्यत्वमभ्यवाप्येत परैः । कथम् ?

**मोक्षस्तावद्विनेयेन श्रद्धातव्यस्तदर्थिना । बंधश्च नान्यथा तस्य तदर्थित्वं घटामटेत् ॥ ४ ॥**
**आस्रवोपि च बंधस्य हेतुः श्रद्धीयते न चेत् । क्वाहेतुकस्य बंधस्य क्षयो मोक्षः प्रसिद्ध्यति ॥५॥**
**बंधहेतुनिरोधश्च संवरो निर्जरा क्षयः । पूर्वोपात्तस्य बंधस्य मोक्षहेतुस्तदाश्रयः ॥ ६ ॥**
**जीवोऽजीवश्च बंधश्च द्विष्ठत्वात्तत्क्षयस्य च । श्रद्धेयो नान्यदाफल्यादिति सूत्रकृतां मतम् ॥ ७ ॥**

ननु च पुण्यपापपदार्थावपि वक्तव्यौ तयोर्बंधव्यत्वाद्बंधफलत्वाद्वा तदश्रद्धाने बंधस्य श्रद्धानानुपपत्तेरसंभवादफलत्वाच्चेति कश्चित् । तदसदित्याह;—

**पुण्यपापपदार्थौ तु बंधास्रवविकल्पगौ । श्रद्धातव्यौ न भेदेन सप्तभ्योतिप्रसंगतः ॥ ८ ॥**

न हि पुण्यपापपदार्थौ बंधव्यौ जीवाजीवबंधव्यवत्, नापि बंधफलं सुखदुःखाद्यनुभवनात्मकनिर्जरा-

वत्। किं तर्हि ? बंधविकल्पौ। पुण्यपापबंधभेदेन बंधस्य द्विविधोपदेशात्। तद्धेतुत्वास्रवविकल्पौ वा सूत्रितौ। ततो न सप्तभ्यो जीवादिभ्यो भेदेन श्रद्धातव्यौ। तथा तयोः श्रद्धानेतिप्रसंगात्। संवरविकल्पानां गुप्त्यादीनां निर्जराविकल्पयोश्च यथाकालौपक्रमिकानुभवनयोः संवरनिर्जराभ्यां भेदेन श्रद्धातव्यतानुषंगात्। नन्वेवं जीवाजीवाभ्यां भेदेन नास्रवादयः श्रद्धेयास्तद्विकल्पत्वात् अन्यथातिप्रसंगादिति न चोद्यं, तेषां तद्विकल्पत्वेपि सार्वकत्वेन भिदा श्रद्धेयत्वोपपत्तेः॥

**बंधो मोक्षस्तयोर्हेतू जीवाजीवौ तदाश्रयौ। ननु सूत्रे षडेवैते वाच्याः सार्वत्ववादिना॥ ९॥**

जीवाजीवौ बंधमोक्षौ तद्धेतु च तत्त्वमिति सूत्रं वक्तव्यं सकलप्रयोजनार्थसंग्रहात्, बंधस्य हि हेतुरास्रवो मोक्षस्य हेतुर्द्विविकल्पः संवरनिर्जराभेदादिति न कस्यचिदसंग्रहस्तत्त्वस्य मोक्षहेतुविकल्पयोः पृथगभिधाने बंधास्रवविकल्पयोरपि पुण्यपापयोः पृथगभिधानप्रसंगादिति चेत्;—

**सत्यं किं त्वाश्रयस्यैव बंधहेतुत्वसंविदे। मिथ्यादृगादिभेदस्य वचो युक्तं परिस्फुटम्॥१०॥**
**मोक्षसंपादिके चोक्ते सम्यक् संवरनिर्जरे। रत्नत्रयादृतेऽन्यस्य मोक्षहेतुत्वहानये॥ ११॥**
**तेनानागतबंधस्य हेतुध्वंसाद्विमुच्यते। संचितस्य क्षयाद्धेति मिथ्यावादो निराकृतः॥ १२॥**
**संचितस्य स्वयं नाशादेष्यद्बंधस्य रोधकः। एकः कश्चिदनुष्ठेय इत्येके तदसंगतम्॥ १३॥**
**निर्हेतुकस्य नाशस्य सर्वथानुपपत्तितः। कार्योत्पादवदन्यत्र विस्रसा परिणामतः॥ १४॥**
**यतश्चानागताघौघनिरोधः क्रियतेऽमुना। तत एव क्षयः पूर्वपापौघस्येत्यहेतुकः॥ १५॥**
**सन्नप्यसौ भवत्येव मोक्षहेतुः स संवरः। तयोरन्यतरस्यापि वैकल्ये मुक्त्ययोगतः॥ १६॥**
**एतेन संचिताशेषकर्मनाशे विमुच्यते। भविष्यत्कर्मसंरोधापायेपीति निराकृतम्॥ १७॥**
**एवं प्रयोजनापेक्षाविशेषादास्रवादयः। निर्दिश्यंते मुनीशेन जीवाजीवात्मका अपि॥ १८॥**

बंधमोक्षौ तद्धेतू च तत्त्वमिति सूत्रं वाच्यं जीवाजीवयोर्बंधमोक्षोपादानहेतुत्वादास्रवस्य बंधसहकारिहेतुत्वात् संवरनिर्जरयोर्मोक्षसहकारिहेतुत्वात् तावता सर्वतत्त्वसंग्रहादिति येप्याहुस्तेप्यनेनैव निराकृताः। आस्रवादीनां पृथगभिधाने प्रयोजनाभिधानात्, जीवाजीवयोश्चानभिधाने सौगतादिमतव्यवच्छेदानुपपत्तेः॥

**जीवादीनामिह ज्ञेयं लक्षणं वक्ष्यमाणकम्। तत्पदानां निरुक्तिश्च यथार्थानतिलंघनात्॥१९॥**

जीवस्य उपयोगलक्षणः, सामर्थ्यादजीवस्यानुपयोगः, आस्रवस्य कायवाङ्मनःकर्मात्मको योगः, बंधस्य कर्मयोग्यपुद्गलादानं, संवरस्यास्रवनिरोधः, निर्जरायाः कर्मैकदेशविप्रमोक्षः, मोक्षस्य कृत्स्नकर्मविप्रमोक्ष इति वक्ष्यमाणं लक्षणं जीवादीनामिह युक्त्यागमाविरुद्धमवबोद्धव्यं। निर्वचनं च जीवादिपदानां यथार्थानतिक्रमात्। तत्र भावप्राणधारणापेक्षाया जीवत्यजीवीज्जीविष्यतीति वा जीवः, न जीवति नाजीवीत् न जीविष्यतीत्यजीवः, आस्रवत्यनेनास्रवणमात्रं वास्रवः, बध्यतेनेन बंधमात्रं वा बंधः, संव्रियतेनेन संवरणमात्रं वा संवरः, निर्जीर्यतेनया निर्जरणमात्रं वा निर्जरा, मोक्ष्यतेनेन मोक्षणमात्रं वा मोक्ष, इति करणभावापेक्षया॥

**क्रमो हेतुविशेषात्स्याद् द्वंद्ववृत्ताविति स्थितेः। जीवः पूर्वं विनिर्दिष्टस्तदर्थत्वाद्वचोविधेः २०**
**तदुपग्रहहेतुत्वादजीवस्तदनंतरम्। तदाश्रयत्वतस्तस्मादास्रवः परतः स्थितः॥ २१॥**
**बंधश्चास्रवकार्यत्वात्तदनंतरमीरितः। तत्प्रतिध्वंसहेतुत्वादजीवस्तदनंतरम्॥ २२॥**
**संवरे सति संभूतेर्निर्जरायास्ततः स्थितिः। तस्यां मोक्ष इति प्रोक्तस्तदनंतरमेव सः॥ २३॥**

जीवादिपदानां द्वंद्ववृत्तौ यथोक्तः क्रमो हेतुविशेषमपेक्षतेऽन्यथा तन्नियमायोगात्। तत्र जीवस्यादौ

वचनं तत्त्वोपदेशस्य जीवार्थत्वात् । प्रधानार्थस्तत्त्वोपदेश इत्ययुक्त. तस्याचेतनत्वात् तत्त्वोपदेशेनानुग्रहासंभवात् घटादिवत् । संतानार्थः स इत्यप्यसारं, तस्यावस्तुत्वेन तदनुग्राह्यत्वायोगात् । निरन्वयक्षणिकचित्तार्थस्तत्त्वोपदेश इत्यप्यसभाव्यं, तस्य सर्वथा प्रतिपाद्यत्वानुपपत्तेः । सकेतग्रहणव्यवहारकालान्वयिनः प्रतिपाद्यत्वप्रतीतेः । चैतन्यविशिष्टकार्यार्थस्तत्त्वोपदेश इति चेत्, तच्चैतन्य कायात्तत्त्वांतरमतत्त्वांतरं वा ? प्रथमपक्षे सिद्धसाध्यता, बंधं प्रत्येकतामापन्नयोः कायचैतन्ययोर्व्यवहारनयाज्जीवव्यपदेशसिद्धेः । निश्चयनयात्तु चैतन्यार्थ एव तत्त्वोपदेशः, चैतन्यशून्यस्य कायस्य तदर्थत्वाघटनात् । द्वितीयपक्षे तु कायानर्थांतरभूतस्य चैतन्यस्य कायत्वात्काय एव तत्त्वोपदेशेनानुगृह्यत इत्यापन्न, तच्चायुक्तमतिप्रसंगात् । ततो जीवार्थ एव तत्त्वोपदेश इति नासिद्धो हेतुः । जीवादनतरमजीवस्याभिधान तदुपग्रहहेतुत्वात् । धर्माधर्माकाशपुद्गलाद्यजीवविशेषा असाधारणगतिस्थित्यवगाहवर्तनादिशरीराद्युपग्रहहेतवो वक्ष्यंते । द्रव्यास्रवस्याजीवविशेषपुद्गलात्मककर्मास्रवत्वादजीवानंतरमभिधान. भावास्रवस्य जीवाजीवाश्रयत्वाद्वा तदुभयानंतरं । सत्यास्रवे बंधस्योत्पत्तेस्तदनंतर तद्वचन. आस्रवबंधप्रतिध्वंसहेतुत्वात् संवरस्य तत्समीपे ग्रहण, सति संवरे परमनिर्जरोपपत्तेस्तदतिके निर्जरावचन, सत्या निर्जरायां मोक्षस्य घटनात्तदनंतरमुपादानं । मोक्षपरमनिर्जरयोरविशेष इति चेतसि मा कृथाः, परमनिर्जरणस्यायोगकेवलिचरमसमयवर्तित्वात्तदनंतरसमयवर्तित्वाच्च मोक्षस्य । य एवात्मनः कर्मबंधविनाशस्य कालः स एव केवलत्वाख्यमोक्षोत्पादस्येति चेत् न, तस्यायोगकेवलिचरमसमयत्वविरोधात् पूर्वस्य समयस्यैव तथात्वापत्तेः । तस्यापि मोक्षत्वे तत्पूर्वसमयस्येति सत्ययोगकेवलिचरमसमयो व्यवतिष्ठेत । न च तस्यैव मोक्षत्वे अतीतगुणस्थानत्वं मोक्षस्य युज्यते चतुर्दशगुणस्थानातःपातित्वानुषंगात् । लोकाग्रस्थानसमयवर्तिनो मोक्षस्यातीतगुणस्थानत्व युक्तमेवेति चेत्, परमनिर्जरातोऽन्यत्वमपि तस्यास्तु निश्चयनयादस्यैव मोक्षत्वव्यवस्थानात् । ततः सूक्तो जीवादीना क्रमो हेतुविशेषः ॥ कि पुनस्तत्त्वमित्याह;—

**तस्य भावो भवेत्तत्त्वं सामान्यादेकमेव तत् । तत्समानाश्रयत्वेन जीवादीनां बहुत्ववाक्॥२४॥**
**भावस्य तद्वतो भेदात् कथंचिन्न विरुध्यते । व्यक्तीनां च बहुत्वस्य ख्यापनार्थत्वतः सदा २५**

तस्य भावस्तत्त्वमिति भावसामान्यस्यैकत्वात्समानाधिकरणतया निर्दिश्यमानाना जीवादीनां बहुत्ववचनं विरुध्यत इति चेत् न, भावतद्वतोः कथंचिद्भेदादेकानेकयोरपि सामानाधिकरण्यदर्शनात् सदसती तत्त्वमिति जातेरेकत्ववत् सर्वदा व्यक्तीनां बहुत्वख्यापनार्थत्वाच्च तयोरेकवचनबहुवचनाविरोधः प्रत्येतव्यः ॥

**जीवत्वं तत्त्वमित्यादि प्रत्येकमुपवर्ण्यते । ततस्तेनार्यमाणोऽयं तत्त्वार्थः सकलो मतः ॥ २६ ॥**

तस्य जीवस्य भावो जीवत्व, अजीवस्य भावो अजीवत्वं, आस्रवस्य भाव आस्रवत्व, बंधस्य भावो बंधत्व, संवरस्य भावः संवरत्वं, निर्जराया भावो निर्जरात्व, मोक्षस्य भावो मोक्षत्वं । तत्त्वमिति प्रत्येकमुपवर्ण्यते, सामान्यचोदनाना विशेषेष्ववस्थानप्रसिद्धेः । तथा च जीवत्वादिना तत्त्वेनार्यत इति तत्त्वार्थो जीवादिः सकलो मत· श्रद्धानविषयः ॥

**जीव एवात्र तत्त्वार्थ इति केचित्प्रचक्षते । तदयुक्तमजीवस्याभावे तत्सिद्ध्ययोगतः ॥ २७ ॥**
**परार्था जीवसिद्धिर्हि तेषां स्याद्वचनात्मिका । अजीवो वचनं तस्य नान्यथान्येन वेदनम् २८**

अस्त्यजीवः परार्थजीवसाधनान्यथानुपपत्तेः । परार्थजीवसाधनं च स्यादजीवश्च न स्यादिति न शंकनीयं, तस्य वचनात्मकत्वाद्वचनस्याजीवत्वात् जीवत्वे परेण संवेदनानुपपत्तेः । स्वार्थस्यैव जीव-

साधनस्य भावात् परार्थं जीवसाधनमसिद्धमिति चेत्, कथं परेषां तत्त्वप्रत्यायनं? तदभावे कथं केचित्प्रतिपादकास्तत्त्वस्य परे प्रतिपाद्यास्तेषामिति प्रतीतिः स्यात् ॥

**न जीवा बहवः संति प्रतिपाद्यप्रतिपादकाः । भ्रांतेरन्यत्र मायादिदृष्टजीववदित्यसत् ॥ २९ ॥**

एक एव हि परमात्मा प्रतिपाद्यप्रतिपादकरूपतयानेको वा प्रतिभासते अनाद्यविद्याप्रभावात् । न पुनर्बहवो जीवाः सति भ्रांतेरन्यत्र मायास्वप्नादिजीववत् तेषां पारमार्थिकतानुपपत्तेः । तथाहि । जीवबहुत्वप्रत्ययो मिथ्या बहुत्वप्रत्ययत्वात् स्वप्नादिदृष्टजीवबहुत्वप्रत्ययवदिति कश्चित्, तदनालोचितवचनम् ॥

**अद्वयस्यापि जीवस्य विभ्रांतत्वानुषंगतः । एकोऽहमिति संवित्तेः स्वप्नादौ भ्रमदर्शनात् ॥ ३० ॥**

शक्यं हि वक्तुं जीवैकत्वप्रत्ययो मिथ्या एकत्वप्रत्ययत्वात् स्वप्नैकत्वप्रत्ययवदिति । एकत्वप्रत्ययश्च स्यान्मिथ्या च न स्याद्विरोधाभावात् । कस्यचिदेकत्वप्रत्ययस्य मिथ्यात्वदर्शनात् सर्वस्य मिथ्यात्वसाधनेतिप्रसंगादिति चेत् समानमन्यत्र ॥

**व्यभिचारविनिर्मुक्तेः संविन्मात्रस्य सर्वदा । न भ्रांततेति चेत्सिद्धा नानासंतानसंविदः ॥ ३१ ॥**
**यथैव मम संवित्तिमात्रं सत्यं व्यवस्थितम् । स्वसंवेदनसंवादात्तथान्येषामसंशयम् ॥ ३२ ॥**

बहुत्वप्रत्ययवदेकत्वप्रत्ययोपि मिथ्यास्तु तस्य व्यभिचारित्वात् स्वप्नादिवत् । स्वसंविन्मात्रस्य तु परमात्मनो निरुपाधेर्व्यभिचारविनिर्मुक्तत्वात् सर्वदा संवादान्न मिथ्यात्वमिति वदतां सिद्धाः स्वसंविदात्मनो नानासंतानाः । स्वस्येव परेषामपि संविन्मात्रस्याव्यभिचारित्वात् । तथाहि । नानासंतानसंविदः सत्याः सर्वदा व्यभिचारविनिर्मुक्तत्वात् स्वसंविदात्मवदिति न मिथ्या प्रतिपाद्यप्रतिपादका, यतः परार्थं जीवसाधनमभ्रांतं न सिध्येत् ॥

**अन्ये त्वत्तो न संतीति स्वस्य निर्णीत्यभावतः । नान्ये मत्तोपि संतीति वचने सर्वशून्यता ३३**
**तस्याप्यन्यैरसंवित्तेर्विशेषाभावतोन्यथा । सिद्धं तदेव नानात्वं पुंसां सत्यममाश्रयम् ॥ ३४ ॥**

मत्तोन्येपि निरुपाधिकं स्वरूपमात्रमव्यभिचारि संविदंतीति निर्णीतेरसंभवात् तत्र प्रत्यक्षस्याप्रवृत्तेरव्यभिचारिणो लिंगस्याभावादनुमानानुत्थानादिति वचने सर्वशून्यतापत्तिः । त्वत्संविदोपि तथान्यैर्निश्चेतुमशक्तेः सर्वथा विशेषाभावात् । यदि पुनरपरैरनिश्चयेपि तथा स्वसंविदः स्वयं निश्चयात् सत्यत्वसिद्धिस्तदा त्वया निश्चेतुमशक्यानामपि तथा परसंविदा सत्यत्वसिद्धेः सिद्धं पुंसा नानात्वं पारमार्थिकम् ॥

**आत्मानं संविदंत्यन्ये न वेति यदि संशयः । तदा न पुरुषाद्वैतनिर्णयो जातु कस्यचित् ॥ ३५ ॥**

मत्तः परेप्यात्मानः स्वसंविदंतो न सत्येवेति निर्णये हि कस्यचित्पुरुषाद्वैते निर्णयो युक्तो न पुनः संशये तत्रापि संशयप्रसंगात् । "पुरुष एवेदं सर्वं" इत्यागमात्पुरुषाद्वैतसिद्धिरिति चेत् "संत्यनंताजीवा" इत्यागमान्नानाजीवसिद्धिरस्तु । पुरुषाद्वैतविधिस्तगागमेन प्रकाशनात् प्रत्यक्षस्यापि विधातृतया स्थितस्य तत्रैव प्रवृत्तेस्तेन तस्याविरोधात् ततः पुरुषाद्वैतनिर्णय इति चेत्, नानात्वागमस्यापि तेनाविरोधान्नानाजीवनिर्णयोऽस्तु । तथाहि;—

**आहुर्विधातृप्रत्यक्षं न निषेद्धृविपश्चितः । न नानात्वागमस्तेन प्रत्यक्षेण विरुध्यते ॥ ३६ ॥**
**तेनानिषेधतेऽन्यस्याभावाभावात् कथंचन । संशीतिगोचरत्वाद्वान्यस्याभावाविनिश्चयात् ॥ ३७ ॥**

भवतु नाम विधातृप्रत्यक्षमनिषेद्धृ च तथापि तेन नानात्वविधायिनो नागमस्य विरोधः संभवत्येकत्वविधायिन इव विधायकत्वाविशेषात् । कथमेकत्वमनिषेधप्रत्यक्षं नानात्वमात्मनो विदधातीति

चेत्, नानात्वमनिषेधदेकत्वं कथं विदधीत? तस्यैकत्वविधानमेव नानात्वप्रतिषेधकत्वमिति चेत्, नानात्वविधानमेवैकत्वनिषेधनमस्तु । किं पुन प्रत्यक्षमात्मनो नानात्वस्य विधायकमिति चेत् तदेकत्वस्य किं? न ह्यस्मदादिप्रत्यक्षमिंद्रियजं मानसं वा स्वसंवेदनमेक एवात्मा सर्व इति विधातु समर्थं नानात्मभेदेषु तस्य प्रवृत्तेः । योगिप्रत्यक्षं समर्थमिति चेत्, पुरुषनानात्वमपि विधातु तदेव समर्थमस्तु तत्पूर्वकागमश्चेत्यविरोधः । स्वसंवेदनमेवास्मदादेः स्वैकत्वस्य विधायकमिति चेत्, तथान्येषां स्वैकत्वस्य तदेव विधायकमनुमन्यतां । कथं?

**यथैव च ममाध्यक्षं विधातृ न निषेधृ वा । प्रत्यक्षत्वात्तथान्येषामन्यथैतत्तथा कुतः ॥ ३८ ॥**

परेषा प्रत्यक्षं स्वस्य विधायकं परस्य न निषेधकं वा प्रत्यक्षत्वान्मम प्रत्यक्षवत् । विपर्ययो वा अतिप्रसंगविपर्ययाभ्यां प्रत्यात्मस्वसंवेदनस्यैकत्वविधायित्वासिद्धेरात्मबहुत्वसिद्धिरात्मैकत्वासिद्धिर्वा । न च विधायकमेव प्रत्यक्षमिति नियमोस्ति. निषेधकत्वेनापि तस्य प्रतीयमानत्वात् । तथाहि;—

**विधात्रहं सदैवान्यनिषेद्धृ न भवाम्यहम् । स्वयं प्रत्यक्षमित्येवं वेत्ति चेन्न निषेद्धृकम् ॥ ३९ ॥**

विधातृ च नान्यनिषेद्धृप्रत्यक्षमिति न प्रमाणांतरान्निश्चयो द्वैतप्रसगात् । स्वत एव यथा निश्चये सिद्धं तस्य निषेधकत्वं परस्य निषेद्धृह न भवामीति स्वयं प्रतीतेः ॥

**संति सत्यास्ततो नाना जीवाः साध्यक्षसिद्धयः । प्रतिपाद्याः परेषां ते कदाचित्प्रतिपादकाः ४०**

यतश्चैवं प्रमाणतो नानात्मनः सिद्धास्ततो न तेषा प्रतिपाद्यप्रतिपादकभावो मिथ्या येन परार्थं जीवसाधनमसिद्ध स्यात् ॥

**परार्थं निर्णयोपायो वचनं चास्ति तत्त्वतः । तच्च जीवात्मकं नेति तद्वदन्यच्च किं न नः ॥४१॥**

न ह्युपायापाये परार्थसाधनं सिध्यति तस्योपेयत्वादन्यथातिप्रसक्तेरिति । तस्योपायोस्ति वचनमन्यथानुपपत्तिलक्षणलिंगप्रकाशकं जीवात्मकमेव तदित्ययुक्तं, प्रतिपादकजीवात्मकत्वे तस्य प्रतिपाद्याद्यसंवेद्यत्वापत्ते. । प्रतिपाद्यजीवात्मकत्वे प्रतिपादकाद्यसंवेद्यतानुपक्तेः, सत्यजीवात्मकत्वे प्रतिपाद्यप्रतिपादकासंवेद्यत्वासंगात् । प्रतिपादकाद्यशेषजीवात्मकत्वे तदनेकत्वे विरोधादेकवचनात्मकत्वेन तेषामेकत्वसिद्धेः । सत्यमेक एवात्मा प्रतिपादकादिभेदमास्तिष्णुते अनाद्यविद्यावशादित्यप्युक्तोत्तरप्रायमात्मनानात्वसाधनात् । कथं चात्मनः सर्वथैकत्वे प्रतिपादकस्यैव तत्र सम्प्रतिपत्तिर्न नु प्रतिपाद्यस्येति प्रतिपद्येमहि । तस्यैव वा विप्रतिपत्तिर्न पुनः प्रतिपादकस्येति तथा तद्भेदस्यैव सिद्धेः । यदि पुनरविद्याप्रभेदात्तथा विभागस्तदा साप्यविद्या प्रतिपादकगता कथ प्रतिपाद्यादिगता न स्यात्? तद्गता वा प्रतिपादकगता तदभेदेपीति साश्चर्यं नश्चेतः । प्रतिपादकगतेयमविद्या प्रतिपाद्यादिगतेयमिति च विभागसंप्रत्ययोनाद्यविद्याकृत एवेति चेत्. किमिदानीं सर्वोप्यविद्याप्रपचः । सर्वात्मगतमस्त्वोस्तु सोप्यविद्यावशाद्यथेति चेत्, तर्हि तत्त्वतो न कश्चिदविद्याप्रपंच इति न तत्कृतो विभागः । परमार्थतः एव प्रतिपादिकादिजीवविभागस्य सिद्धेः । ततो नैकात्मव्यवस्थानं येन वचसोशेषजीवात्मकत्वे यथोक्तो दोषो न भवेदिति न जीवात्मकं वचनं । तद्वच्छरीरादिकमप्यजीवात्मकमस्माकं प्रसिध्यत्येव ॥

**बाह्येंद्रियपरिच्छेद्यः शब्दो नात्मा यथैव हि । तथा कायादिरर्थोपि तदजीवोस्ति वस्तुतः ४२**

न केवलं प्रतिपादकस्य शरीरं लिप्यक्षरादिकं वा परप्रतिपत्तिसाधन वचनवत् साक्षात् परसंवेद्यत्वादजीवात्मकं । किं तर्हि? बाह्येंद्रियग्राह्यत्वाच्च । जीवात्मकत्वे तदनुपपत्तेरिति सूक्तं परार्थसाधनान्यथानुपपत्तेरजीवास्तित्वसाधनम् ॥

**योपि ब्रूते पृथिव्यादिरजीवोध्यक्षनिश्चितः । तत्त्वार्थ इति तस्यापि प्रायशो दत्तमुत्तरम् ॥४३॥**

अस्ति जीवः स्वार्थाजीवसाधनान्यथानुपपत्तेः पृथिव्यादिरजीव एव तत्त्वार्थ इति न स्वयं साधनमंतरेण निश्चेतुमर्हति कस्यचिदसाधनस्य निश्चयायोगात् । सत्त्वात्तथा निश्चय इति चेत् न, तस्याचेतनत्वात् चेतनत्वे तत्त्वांतरत्वसिद्धेस्तस्यैव जीवत्वोपपत्तेः । स्यान्मतमजीवविवर्तविशेषश्चेतनात्मकं प्रत्यक्षं न पुनर्जीव इति । तदसत् । चेतनाचेतनात्मकयोर्विवर्तविवर्तिभावस्य विरोधात् परस्परं विजातीयत्वाज्जलानलवत् । सुवर्णरूप्यवद्विजातीयत्वेपि तद्भावः स्यादिति चेन्न, तयोः पार्थिवत्वेन सजातीयत्वात् लोहत्वादिभिश्च तर्हि चेतनयोः सत्त्वादिभिः सजातीयत्वात्तद्भावो भवत्विति चेन्न भवतो जलानलाभ्यामनेकांतात् । तयोरद्रव्यांतरत्वात्तद्भाव इति चेन्न, असिद्धत्वात् । तयोरपि द्रव्यांतरत्वस्य निर्णयात्तद्भावायोगात् । निर्णेष्यते हि लक्षणभेदाच्चेतनाचेतनयोर्द्रव्यांतरत्वमिति न तयोर्विवर्तविवर्तिभावो येन चेतनात्मकं प्रत्यक्षं जीवद्रव्यस्वरूपं न स्यात् । प्रायेण दत्तोत्तरं च चेतनस्याद्रव्यांतरत्ववचनमिति न जीवमंतरेण स्वार्थजीवसाधनमुपपद्यते । एतेन स्मृतिप्रत्यभिज्ञानानुमानादिकं गौणपृथिव्याद्यजीवसाधनं स्वार्थं जीवमंतरेणानुपपन्नमिति निवेदितं, तस्यापि चेतनद्रव्यस्वरूपत्वाविशेषात् प्रधानादिरूपतया तस्य प्रतिविहितत्वात् ॥

**न कायादिक्रियारूपो जीवस्यास्त्यास्रवः सदा । निःक्रियत्वाद्यथा व्योम्न इत्यसत्तदसिद्धितः ४४**
**क्रियावान् पुरुषोसर्वगतद्रव्यत्वतो यथा । पृथिव्यादिः स्वसंवेद्यं साधनं सिद्धमेव नः ॥ ४५ ॥**

न हि क्रियावत्त्वे साध्ये पुरुषस्यासर्वगतद्रव्यत्वं साधनमसिद्धं तस्य स्वसंवेद्यत्वात् पृथिव्यादिवत् । आत्मसर्वगतद्रव्यत्वेनात्मनः संवेदनमिति चेत् न, बाधकाभावात् । सर्वगत आत्माऽमूर्तत्वादाकाशवदित्येतद्बाधकमिति चेन्न, अस्य प्रतिवादिनां कालेनानेकांतात् । कालोपि सर्वगतस्तत एव तद्वदिति नात्र पक्षस्यानुमानागमबाधितत्वम् । तथाहि । आत्मा कालश्चासर्वगतो नानाद्रव्यत्वात् पृथिव्यादिवत् । कालो नानाद्रव्यत्वेनासिद्ध इति चेन्न, युगपत्परस्परविरुद्धनानाद्रव्यक्रियोत्पत्तौ निमित्तत्वात्तद्वत् । खेन व्यभिचारीदं साधनमिति चेन्न, तस्यावगाहनक्रियामात्रत्वेन प्रसिद्धेस्तत्रानिमित्तत्वात् । निमित्तत्वे वा परिकल्पनानर्थक्यात् तत्कार्यस्याकाशादेवोत्पत्तिघटनात् परापरत्वपरिणामक्रियादीनामाकाशनिमित्तकत्वविरोधादवगाहनवत् परापरयौगपद्यायौगपद्यचिरक्षिप्रप्रत्ययलिंगः कालोन्य एवाकाशादिति चेत्, स्यादेवं यदि परत्वादिप्रत्ययनिमित्तत्वमाकाशस्य विरुध्येत । शब्दलिंगत्वादाकाशस्य तन्निमित्तत्वं विरुध्यत एवेति चेन्न, एकस्यापि नानाकार्यनिमित्तत्वेन दर्शनात् स्वयमीश्वरस्य तथाभ्युपगमाच्च । यदि पुनरीशस्य नानार्थसिसृक्षाभिसंबंधान्नानाकार्यनिमित्तत्वमविरुद्धं तदा नभसोपि नानाशक्तिसंबंधात्तदविरुद्धमस्तु विशेषाभावात् । तथा चात्मादिकालाद्यशेषद्रव्यकल्पनमनर्थकं तत्कार्याणामाकाशेनैव निवर्तयितुं शक्यत्वात् । अथ परस्परविरुद्धबुद्ध्यादिकार्याणां युगपदेकद्रव्यनिवर्त्यत्वविरोधात्तन्निमित्तानि नानात्मादिद्रव्याणि कल्प्यंते तर्हि नानाद्रव्यक्रियाणामन्योन्यविरुद्धानां सकृदेककालद्रव्यनिमित्तत्वानुपपत्तेस्तन्निमित्तानि नानाकालद्रव्याण्यनुमन्यध्वं । तथा च नासिद्धं नानाद्रव्यत्वमात्मकालयोरसर्वगतत्वसाधनं । नापि पृथिव्यादिदृष्टांतः साधनधर्मविकलः पृथिव्यप्तेजोवायूनां धारणक्लेदनपचनस्यंदनलक्षणपरस्परविरुद्धक्रियानिमित्तत्वेन सकृदुपलभ्यमानत्वात् । नापि साध्यधर्मविकलस्तेषां कथंचिन्नानाद्रव्यत्वसिद्धेरित्यनुमानविरुद्धं पक्षं कालात्मसर्वगतत्वासाधनं, लोकाकाशप्रदेशेषु प्रत्येकमेकैकस्य कालाणोरवस्थानाद्रत्नराशिवत् कालाणवोऽसंख्याताः स्वयं वर्तमानानामर्थानां निमित्तहेतव इत्यागमविरुद्धं पक्षं च । न चायमागमोप्र-

माणं सर्वथाप्यसंभवद्बाधकत्वादात्मादिप्रतिपादकागमवत् । ततः सिद्धमसर्वगतद्रव्यत्वमात्मनः क्रियावत्त्व साधयत्येव । कालाणुनानैकांतिकमिति चेन्न, तत्रासर्वगतद्रव्यत्वस्याभावात् । सर्वगतद्रव्यत्वप्रतिषेधे हि तत्सदृशेन्यत्र सकृन्नानादेशसंबंधिनि सप्रत्ययो न पुनर्निरंशे कालाणौ । 'नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिरिति' वचनात्, प्रसह्यप्रतिषेधानाश्रयणात् । असख्येयभागादिषु जीवानामिति जीवावगाहस्य नानालोकाकाशप्रदेशवर्तितया वक्ष्यमाणत्वात् । तथा च कतिपयप्रदेशव्यापिद्रव्यत्वादिति हेत्वर्थः प्रतिष्ठितः । न च कालाणुः स्याद्वादिना कतिपयप्रदेशव्यापिद्रव्य यतस्तेन हेतोर्व्यभिचार । कालादन्यत्वे सत्यसर्वगतद्रव्यत्वादिति स्पष्टं साधनव्यभिचारि वाच्यमिति चेन्न किंचिदनिष्टमीदृगर्थस्य हेतोरिष्टत्वात् । परेषा तु कालस्य सर्वगतद्रव्यत्वेनाभिप्रेतत्वात्तेन व्यभिचारचोदनस्यासभवाद्वार्तिके तथा विशेषणाभावः । एवं च निरवद्यात्साधनादात्मनः क्रियावत्त्वसिद्धेः कायादिक्रियारूपोऽस्यास्रवः प्रसिध्यत्येव । कायालंबनाया जीवप्रदेशपरिस्पदनक्रियायाः कायास्रवत्वाद्वागालंबनाया वागाश्रयत्वान्मनोवर्गणालंबनाया मानसाश्रयत्वात् ॥

**बंधः पुंधर्मतां धत्ते द्विष्ठत्वान्न प्रधानके । केवलेऽसंभवात्तस्य धर्मोसौ नावधार्यते ॥ ४६ ॥**

न हि प्रधानस्यैव धर्मो बंधः सभवति तस्य द्विष्ठत्वादिति । जीवस्यापि धर्मः सोवधार्यते सर्वथा पुरुषस्य बंधाभावे बंधफलानुभवनायोगाद्बंधवत् प्रकृतिससर्गाद्बधफलानुभवन तस्येति चेत्, स एव बंधविवर्तात्मिकया प्रकृत्या ससर्गः पुरुषस्य बधः । इति सिद्धः कथंचित्पुरुषधर्मः ससर्गस्य द्विष्ठत्वात् ॥

**संवरो जीवधर्मः स्यात् कर्मस्थो निर्जरापि च । मोक्षश्च कर्मधर्मोपि कर्मस्थो बंधवन्मतः ॥४७॥**
**धर्मिधर्मात्मकं तत्त्वं सप्तभेदमितीरितम् । श्रद्धेयं ज्ञेयमाध्येयं मुमुक्षोर्नियमादिह ॥ ४८ ॥**

जीवाजीवौ हि धर्मिणौ तद्धर्मास्त्वास्रवादय इति धर्मिधर्मात्मकं तत्त्वं सप्तविधमुक्तं मुमुक्षोरवश्यं श्रद्धेयत्वाद्विज्ञेयत्वादाध्येयत्वाच्च सम्यग्दर्शनज्ञानध्यानविषयत्वान्निर्विषयसम्यग्दर्शनाद्यनुपपत्तेस्तद्विषयांतरस्यासभवात् । सभवे तत्रैवातर्भावात ॥

**न च तत्त्वांतराभावस्तत्त्वमष्टममासजेत् । सप्ततत्त्वास्तितारूपो ह्येषोऽन्यस्याप्रतीतितः ॥ ४९ ॥**
**तत्त्वं सतश्च सद्भावोऽसतोऽसद्भाव इत्यपि । वस्तुन्येव द्विधा वृत्तिर्व्यवहारस्य वक्ष्यते ॥५०॥**
**यथा हि सति सत्त्वेन वेदनं सिद्धमंजसा । तथा सदंतरे सिद्धमसत्त्वेन प्रवेदनम् ॥ ५१ ॥**
**असद्रूपप्रतीतिर्हि नावस्तुविषया क्वचित् । भावांशविषयत्वात् स्यात् सितत्वादिप्रतीतिवत् ॥५२॥**
**भावांशोसत्सदाभावविशेषणतयेक्षणात् । सर्वथाभावनिर्मुक्तस्यादृष्टेः पाटलादिवत् ॥ ५३ ॥**

न ह्यभावः सर्वथा तुच्छः प्रत्यक्षतोऽनुमानतो वा प्रतीयते यतोस्य सर्वदा भावविशेषणतया दर्शनमप्रसिद्धं स्यात् तत्प्रसिध्यदभावस्य भावांशत्व साधयति सितत्वादिवत् । ततो न क्वचिदवस्तुनि कस्यचिदसत्त्वप्रतीतिर्वस्तुन्येव तत्प्रतीतेस्तत्त्वांतराभावस्य सप्ततत्त्व··········(?) सिद्धेरन्यमतत्वासंभावनैवेति सर्वसग्रहः ॥

**प्रमाणादय एव स्युः पदार्थाः षोडशेति तु । ब्रुवाणानां न सर्वस्य संग्रहो व्यवतिष्ठते ॥५४॥**
**तत्रानध्यवसायस्य विपर्यासस्य वा गतेः । नास्याप्रमाणरूपस्य प्रमाणग्रहणाद्गतिः ॥ ५५ ॥**
**संशीतिवत्प्रमेयांतर्भावे तत्त्वद्वयं भवेत् । संशयादेः पृथग्भावे पृथग्भावोस्य किं ततः ॥५६॥**
**प्रमाणविधिसामर्थ्यादप्रमाणगतौ यदि । तत्रानध्यवसायादेरंतर्भावो विरुध्यते ॥ ५७ ॥**
**संशयस्य तदात्रैव नांतर्भावः किमिष्यते । प्रमाणभावरूपत्वाविशेषात्तस्य सर्वथा ॥ ५८ ॥**

**प्रमाणवृत्तिहेतुत्वात् संशयश्चेत् पृथक्कृतः । तत एव विधीयेत जिज्ञासादिस्तथा न किम् ॥५९**
**अभावस्याविनाभावसंबंधादेरसंग्रहात् । प्रमाणादिपदार्थानामुपदेशो न दोषजित् ॥ ६० ॥**
**द्रव्यादिषट्पदार्थानामुपदेशोपि तादृशः । सर्वार्थसंग्रहाभावादनाप्तोपज्ञमित्यतः ॥ ६१ ॥**
**सूत्रेवधारणाभावाच्छेपार्थस्यानिराकृतौ । तत्त्वेनैकेन पर्याप्तमुपदिष्टेन धीमताम् ॥ ६२ ॥**

प्रमाणादिसूत्रे द्रव्यादिसूत्रे वावधारणाभावादनध्यवसायविपर्ययजिज्ञासाद्यविनाभावविशेषणविशेष्य-भावप्रागभावादयः सगृहीता एवेति सर्वसग्रहे प्रमाण तत्त्वं द्रव्यं तत्त्वमिति चोपदेशः कर्तव्यस्तत्रानव-धारणादेव प्रमेयादीना गुणादीनां वानध्यवसायादिवत्सग्रहोपपत्तेरित्याकुलत्वादनाप्तमूल एवायं प्रमाणाद्यु-पदेशो द्रव्याद्युपदेशो वा प्रकृत्याद्युपदेशवत् ॥

**नन्वेवं सप्ततत्त्वार्थवचनेनाप्यसंग्रहात् । रत्नत्रयस्य तद्बाध्येप्ययुक्तत्वमितीतरे ॥ ६३ ॥**

न हि रत्नत्रयं जीवादिष्वंतर्भवत्यद्रव्यत्वादास्रवादित्वाभावाच्च । तस्य तत्त्वांतरत्वे कथं सप्तैव तत्त्वानि यतो जीवादिसूत्रेण सर्वतत्त्वासग्रहात्, तदप्ययुक्तं न भवेदिति केचित् ॥

**तदसत्तस्य जीवादिस्वभावत्वेन निर्णयात् । तथा पुण्यास्रवत्वेन संवरत्वेन वा स्थितेः ॥६४॥**
**जीवाजीवप्रभेदानामनंतत्वेपि नान्यता । प्रसिद्ध्यत्यास्रवादिभ्य इत्यव्याप्त्याद्यसंभवः ॥ ६५ ॥**

न हि जीवो द्रव्यमेव पर्याय एव वा येन तत्पर्यायविशेषाः सम्यग्दर्शनादयः तद्ग्रहणेन न गृह्यंते, द्रव्यपर्यायात्मकस्य जीवत्वस्याभिप्रेतत्वात् । ततो नाद्रव्यत्वेपि रत्नत्रयस्य जीवेंतर्भावाभावः । तथास्रवादि-त्वाभावोप्यसिद्धस्तस्य पुण्यास्रवत्वेन सवरत्वेन च वक्ष्यमाणत्वात इति नास्रवादिष्वनंतर्भावः । येपि च जीवाजीवयोरनंताः प्रभेदास्तेपि जीवस्य पुण्यागमस्य हेतवः पापागमस्य वा पुण्यपापागमननिरोधिनो वा तद्बंधनिर्जरणहेतवो वा मोक्षस्वभावा वा. गत्यंतराभावात् । इति नास्रवादिभ्योऽन्यता लभ्यंते येना-व्याप्तिरतिव्याप्त्यसभवौ तु दूरोत्सारितावेवेति निरवद्यं जीवादिसप्ततत्त्वप्रतिपादकं सूत्र, ततस्तदाप्तो-पज्ञमेव ॥

नन्वेते जीवादयः शब्दब्रह्मणो विवर्ताः शब्दब्रह्मैव नाम तत्त्वं नान्यदिति केचित् । तेषा कल्पना-रोपमात्रत्वात । तस्य च स्थापनामात्रमेवेत्यन्ये, तेषा द्रव्यांतःप्रविष्टत्वात । तद्व्यतिरेकेणासंभवात् द्रव्यमेवेत्येके । पर्यायमात्रव्यतिरेकेण सर्वस्याघटनाद्भाव एवेत्यपरे । तन्निराकरणाय लोकसमयव्यवहारेष्व-प्रकृतापाकरणाय प्रकृतव्याकरणाय च संक्षेपतो निक्षेपप्रसिद्ध्यर्थमिदमाह;—

## नामस्थापनाद्रव्यभावतस्तन्न्यासः ॥ ५ ॥

न नाममात्रत्वेन स्थापनामात्रत्वेन द्रव्यमात्रत्वेन भावमात्रत्वेन वा संकरव्यतिरेकाभ्या वा जीवा-दीना निक्षेप इत्यर्थः ॥ तत्र—

**संज्ञाकर्मानपेक्ष्यैव निमित्तांतरमिष्टितः । नामानेकविधं लोकव्यवहाराय सूत्रितम् ॥ १ ॥**

न हि नाम्नोऽनभिधाने लोके तद्व्यवहारस्य प्रवृत्तिर्घटते येन तन्न सूत्र्यते । नापि तदेकविधमेव विशेषतोनेकविधत्वेन प्रतीतेः । किंचिद्धि प्रतीतमेकजीवनाम यथा डित्थ इति. किंचिदनेकजीवनाम यथा यूथ इति, किंचिदेकाजीवनाम यथा घट इति, किंचिदनेकाजीवनाम यथा प्रासाद इति । किंचि-देकजीवैकाजीवनाम यथा प्रतीहार इति, किंचिदेकजीवानेकाजीवनाम यथा काहार इति, किंचिदेका-जीवानेकजीवनाम यथा मन्दुरेति, किंचिदनेकजीवाजीवनाम यथा नगरमिति प्रतिविषयमवातरभेदाद्ब-हुधा भिद्यते सव्यवहाराय नाम लोके । तच्च निमित्तांतरमनपेक्ष्य सज्ञाकरण वक्तुरिच्छातः प्रवर्तते ॥

किं पुनर्नाम्नो निमित्तं किं वा निमित्तांतरं ? इत्याह;—

**नाम्नो वक्तुरभिप्रायो निमित्तं कथितं समम् । तस्मादन्यत्तु जात्यादिनिमित्तांतरमिष्यते ॥ २ ॥**
**जातिद्वारेण शब्दो हि यो द्रव्यादिषु वर्तते । जातिहेतुः स विज्ञेयो गौरश्व इति शब्दवत् ॥३॥**
**जातावेव तु यत्संज्ञाकर्म तन्नाम मन्यते । तस्यामपरजात्यादिनिमित्तानामभावतः ॥ ४ ॥**
**गुणे कर्मणि वा नाम संज्ञा कर्म तथेष्यते । गुणकर्मांतराभावाज्जातेरप्यनपेक्षणात् ॥ ५ ॥**
**गुणप्राधान्यतो वृत्तो द्रव्ये गुणनिमित्तकः । शुक्लः पाटल इत्यादिशब्दवत्संप्रतीयते ॥ ६ ॥**
**कर्मप्राधान्यतस्तत्र कर्महेतुर्निबुध्यते । चरति प्लवते यद्वत् कश्चिदित्यतिनिश्चितम् ॥ ७ ॥**
**द्रव्यांतरमुखे तु स्यात्प्रवृत्तो द्रव्यहेतुकः । शब्दस्तद्विविधस्तज्ज्ञैर्निगकुलमुदाहृतः ॥ ८ ॥**
**संयोगिद्रव्यशब्दः स्यात् कुंडलीत्यादिशब्दवत् । समवायिद्रव्यशब्दो विषाणीत्यादिरास्थितः ९**
**कुंडलीत्यादयः शब्दा यदि संयोगहेतवः । विषाणीत्यादयः किं न समवायनिबंधनाः॥१०॥**
**तथा सति न शब्दानां वान्या जातिगुणक्रियाः । द्रव्यवत्समवायेन स्वसंबंधिषु वर्तनात् ११**
**यथा जात्यादयो द्रव्ये समवायबलात् स्थिताः । शब्दानां विषयस्तद्वत् द्रव्यं तत्रास्तु किंचन १२**
**संयोगबलतश्चैवं वर्तमानं तथेष्यताम् । द्रव्यमात्रे तु संज्ञानं नामेति स्फुटमीक्ष्यते ॥ १३ ॥**
**तेन पंचतयी वृत्तिः शब्दानामुपवर्णिता । शास्त्रकारैर्न बाध्येत न्यायसामर्थ्यसंगता ॥ १४ ॥**

वक्तुर्विवक्षायामेव शब्दस्य प्रवृत्तिस्तत्प्रवृत्तेः सैव निमित्त न तु जातिद्रव्यगुणक्रियास्तदभावात् । स्वलक्षणेध्यक्षतस्तदनवभासनात्, अन्यथा सर्वस्य तावतीना बुद्धीनां सकृदुदयप्रसगात् । प्रत्यक्षपृष्ट-भाविन्यां तु कल्पनायामवभासमाना जात्यादयो यदि शब्दस्य विषयास्तदा कल्पनैव तस्य विषय इति केचित् । तेप्यनालोचितवचना. । प्रतीतिसिद्धत्वाज्जात्यादीना शब्दनिमित्ताना वक्तुरभिप्रायनिमित्तांतरतो-पपत्तेः । सदृशपरिणामो हि जातिः पदार्थाना प्रत्यक्षत. प्रतीयते विसदृशपरिणामाख्यविशेषवत् । पिंडोयं गौरयं च गौरिति प्रत्ययात् खंडोयं मुंडोयमितिप्रत्ययवत । भ्रांतोयं सादृश्यप्रत्ययः इति चेत् विसदृशप्रत्ययः कथमभ्रातः ? सोपि भ्रात एव स्वलक्षणप्रत्ययस्यैवाभ्रांतत्वात् तस्य स्पष्टाभत्वादविसवाद-कत्वाच्चेति चेत् नाक्षजस्य सादृश्यादिप्रत्ययस्य स्पष्टाभत्वाविशेषादभ्रान्तत्वस्य निराकर्तुमशक्ते । सादृश्य-वैसदृश्यव्यतिरेकेण स्वलक्षणस्य जातुचिदप्रतिभासनात् । सदृशेतरपरिणामात्मकस्यैव सर्वदोपलंभात । सर्वतो व्यावृत्तानशक्षणिकस्वलक्षणस्य प्रत्ययविषयतया निराकरिष्यमाणत्वात । सविकल्पप्रत्यक्षे सदृश-परिणामस्य स्पष्टमवभासनात् सर्वथा बाधकाभावात् । वृत्तिविकल्पादिदूषणस्यात्रानवतारात् । न हि सदृशपरिणामो विशेषेभ्योत्यंतं भिन्नो नाप्यभिन्नो येन भेदाभेदैकांतदोषोपपातः । कथंचिद्भेदाभेदात् । न च तेषु तस्य कथंचित्तादात्म्यादन्या वृत्तिरेकदेशेन सर्वात्मना वा यत. सावयवत्वं सादृश्यपरिणामस्य व्यक्त्यंतरा वृत्तिर्वा स्यात् । न चास्य सर्वगतत्वं येन कर्कादिषु गोत्वादिप्रत्ययसाकर्यं, नापि स्वव्यक्तिषु सर्वास्वेक एव येनोत्पित्सुव्यक्तौ पूर्वाधारस्य त्यागेनागमने तस्य निःसामान्यत्व तदत्यागेनागतौ सावयवत्वं प्रागेव तद्देशेस्तित्वे स्वप्नप्रत्ययहेतुत्व प्रसज्यते, विसदृशपरिणामेनेव सदृशपरिणामेनाक्रांताया एवोत्पि-त्सुव्यक्तेः स्वकारणादुत्पत्तेः । कथमेवं नित्या जातिरुत्पत्तिमद्व्यक्तिवदिति चेत्, द्रव्यार्थादेशादिति ब्रूमः । व्यक्तिरपि तथा नित्या स्यादिति चेत् न किंचिदनिष्टं, पर्यायार्थादेशादेव विशेषपर्यायस्य सामान्य-पर्यायस्य वा नित्यत्वोपगमात् । नोत्पत्तिमत्सामान्यमुत्पित्सुव्यक्तेः पूर्वं व्यक्त्यंतरे तत्प्रत्ययादिति चेत् । तत एव विशेषोप्युत्पत्तिमान्मा भूत् । पूर्वो विशेषः स्वप्रत्ययहेतुरन्य एवोत्पित्सुविशेषादिति चेत, पूर्व-व्यक्तिसामान्यमप्यन्यदस्तु । तर्हि सामान्यं समानप्रत्ययविषयो न स्यात् व्यक्त्यात्मकत्वाद्व्यक्तिस्वात्मवदिति

चेत् न, सदृशपरिणामस्य व्यक्तेः कथंचिद्भेदप्रतीतेः। प्रथममेकव्यक्तावपि सदृशपरिणामः समानप्रत्ययविषयः स्यादिति चेत् न, अनेकव्यक्तिगतस्यैवानेकस्य सदृशपरिणामस्य समानप्रत्ययविषयतया प्रतीतेः विशेषप्रत्ययविषयतया वैसदृशपरिणामवत्। ननु च प्रतिव्यक्तिभिन्नो यदि सदृशपरिणामः परं सदृशपरिणाममपेक्ष्य समानप्रत्ययविषयस्तदा व्यक्तिरेव परां व्यक्तिमपेक्ष्य तथास्तु विशेषाभावादलं सदृशपरिणामकल्पनयेति चेत् न, विसदृशव्यक्तेरपि व्यक्त्यंतरापेक्षया समानप्रत्ययविषयत्वप्रसंगात्। तथा च दधिकरभादयोपि समाना इति प्रतीयेरन्। ननु चैकस्यां गोव्यक्तौ गोत्वं सदृशपरिणामो गोव्यक्त्यंतरसदृशपरिणाममपेक्ष्य यथा समानप्रत्ययविषयस्तथा सत्त्वादिसदृशपरिणामं कर्कादिव्यक्तिगतमपेक्ष्य स तथास्तु भेदाविशेषात्तदविशेषेपि शक्तिः तादृशी तस्य तया किंचिदेव सदृशपरिणामं सन्निधाय तथा न सर्वमिति नियमकल्पनायां दधिव्यक्तिरपि दधिव्यक्त्यंतरापेक्ष्य दधित्वप्रत्ययतामियर्तु तादृशशक्तिसंधानात्करभादीनपेक्ष्य मास्मेय इति चेत् सा तर्हि शक्तिर्व्यक्तीनां कासांचिदेव समानप्रत्ययत्वहेतुर्यैका तदा जातिरेवैकसादृश्यवत्। तदुक्तं जातिवादिना। "अभेदरूपं सादृश्यमात्मभूताश्च शक्तयः। जातिपर्यायशब्दत्वमेषामभ्युपवर्ण्यते" इति। अथ शक्तिरपि तासां भिन्ना सैव सदृशपरिणाम इति नाममात्रं भिद्यते कथं नियतव्यक्त्याश्रयाः केचिदेव सदृशपरिणामाः समानप्रत्ययविषया इति चेत्. शक्तयः कथं काश्चिदेव नियतव्यक्त्याश्रयाः समानप्रत्ययविषयत्वहेतव? इति समः पर्यनुयोगः। शक्तयः स्वात्मभूता एव व्यक्तीनां स्वकारणात्तथोपजाता इति चेत् सदृशपरिणामास्तथैव सन्तु। ननु च यथा व्यक्तयः समाना एता इति प्रत्ययस्तत्समानपरिणामविषयस्तथा समानपरिणामा एते इति तत्र समानप्रत्ययोपि तदपरसमानपरिणामहेतुरस्तु। तथा चानवस्थान। यदि पुनः समानपरिणामेषु स्वसमानपरिणामाभावेपि समानप्रत्ययस्तदा खंडादिव्यक्तिषु किं समानपरिणामकल्पनया। नित्यैकव्यापिसामान्यवत्तदनुपपत्तेरिति चेत् कथमिदानीमर्थानां विसदृशपरिणामा विशेषप्रत्ययविषयाः? स्वविसदृशपरिणामातरेभ्य इति चेदनवस्थानं। स्वत एवेति चेत्सर्वत्र विसदृशपरिकल्पनानर्थक्यं। स्वकारणादुपजाताः सर्वेर्था विसदृशप्रत्ययविषयाः स्वभावत एवेति चेत्, समानप्रत्ययविषयास्ते स्वभावतः स्वकारणादुपजायमानाः किं नानुमन्यंते तथा प्रतीत्यपलापे फलाभावात्। केवलं स्वस्वभावो विशेषप्रत्ययविषयोर्थाना विसदृशपरिणामः, समानप्रत्ययविषयः सदृशपरिणाम इति व्यपदिश्यते न पुनरव्यपदेश्यः। सामर्थ्यं वा तत्तादृशमिति पर्यैते व्यवस्थापयितुं युक्तं, ततो लोकयात्रायाः प्रवृत्त्यनुपपत्तेः। संनिवेशविशेषस्तत्प्रत्ययविषयो व्यपदिश्यत इति चेत्, स कथं परिमितास्वेव व्यक्तिषु न पुनरन्यासु स्यात्। स्वहेतुवशादिति चेत् स एव हेतुस्तत्प्रत्ययविषयोस्तु किं संनिवेशेन, सोपि हेतुः कुतः परिमितास्वेव व्यक्तिषु स्यादिति समानः पर्यनुयोगः। स्वहेतोरिति चेत् सोपि कुत इत्यनिष्टानं पर्यैते नित्यो हेतुरुपेयते। अनवस्थानपरिहरणसमर्थ इति चेत् प्रथमत एव सोभ्युपेयतां सनिवेशविशेषप्रसवाय। सोपि कुतः परिमितास्वेव व्यक्तिषु संनिवेशविशेषं प्रसूते न पुनरन्यास्विति वाच्यं। स्वभावात्तादृशात्सामर्थ्याद्वा व्यपदेश्यादिति चेत् तर्हि तेन वाग्गोचरातीतेन स्वभावेन सामर्थ्येन वा वचनमार्गावतारिवस्तुनिबंधना लोकयात्रा प्रवर्तत इति। समभ्यधायि भर्तृहरिणा। "स्वभावो व्यपदेश्यो वा सामर्थ्यं वावतिष्ठते। सर्वस्यांते यतस्तस्माद्व्यवहारो न कल्पते" इति। तस्माद्वाग्गोचरवस्तुनिबंधनं लोकव्यवहारमनुरुध्यमानैर्व्यपदेश्यैव जातिः सदृशपरिणामलक्षणा स्फुटमेषितव्या। तत्साध्यस्य कार्यस्य तदधिकरणेन साधयितुमशक्तेः। पुरुषे दंडीतिप्रत्ययवद्दंडसबंधेन साध्यस्य तदधिकरणेन पुरुषमात्रेण वा साधयितुमशक्यत्वात्। दंडोपादित्सया दंडीतिप्रत्ययः साध्यते इति चायुक्तं, ततो दंडोपादित्सावानिति प्रत्ययस्य प्रसूतेः। अन्यथा

स्यापीच्छाकारणे. संस्तनोपकारगुणदर्शनादिभिः साध्यत्वप्रसंगात्। ततः सर्वस्य स्वानुरूपप्रत्ययविषयत्वं वस्तुनोभिप्रेयता समानपरिणामस्यैव समानप्रत्ययविषयत्वमभिप्रेतव्यं। एकत्वस्वभावस्य सामान्यस्यैकत्वप्रत्ययविषयत्वप्रसगात्। स एवायं गौरित्येकत्वप्रत्यय एवेति चेत् न, तस्योपचरितत्वात्। स इव स इति तत्समाने तदेकत्वोपचारात् स गौरयमपि गौरिति समानप्रत्ययस्य सकलजनसाक्षिकस्यास्खलद्रूपतयानुपचरितत्वसिद्धेः। कश्चिदाह। दंडीत्यादिप्रत्ययः परिच्छिद्यमानदडसबधादिविषयतया नार्थांतरविषयः कल्पयितुं शक्यः समानप्रत्ययस्तु परिच्छिद्यमानव्यक्तिविषयत्वाभावादर्थांतरविषयस्तच्चार्थांतरं सामान्यं प्रत्यक्षतः परिच्छेद्यमन्यथा तस्य यत्नोपनेयप्रत्ययत्वाघटनात् नीलादिवदिति। तदसत्। सामान्यस्य विशेषवत्प्रत्यक्षत्वेपि यत्नोपनीयमानप्रत्ययत्वाविरोधात्। प्रमाणसप्लवस्यैकत्रार्थे व्यवस्थापनात् सामान्यमेव परिच्छिद्यमानस्वरूपं न विशेषास्तेषा व्यावृत्तिप्रत्ययानुमेयत्वादिति वदतोपि निषेद्धुमशक्तेः। न हि वस्तुस्वरूपमेव व्यावर्तमानाकारप्रत्ययस्य निबंधन अपि तु तत्संसर्गिणोर्थास्ते च भेदहेतवो यदा सकलास्तिरयते तदा सद्वस्तु पदार्थ इति वा निरुपाधिसामान्यप्रत्ययः प्रसूते, यदा तु गुणकर्मभ्या भेदहेतवो अतिरोभूताः शेषास्तिरोधीयंते तदा द्रव्यमिति बुद्धिरेवमवांतरसामान्येष्वशेषेष्वपि बुद्धय प्रवर्तंते भेदहेतूना पुनराविर्भूताना वस्तुना संसर्गे तत्र विशेषप्रत्ययः। तथाच सामान्यमेव वस्तुस्वरूप विशेषास्तूपाधिबलावलंबिन इति मतांतरमुपतिष्ठेत। वस्तुविशेषा नोपाधिका यत्नोपनेयप्रत्ययत्वाभावात् स्वयं प्रतीयमानत्वादिति चेत तत एव सामान्यमौपाधिकं माभूत्। सामान्यविशेषयोर्वस्तुस्वभावत्वे सर्वत्रोभयप्रत्ययप्रसक्तिरिति चेत् किं पुनस्तयोरेकतरप्रत्यय एव क्वचिदस्ति। दर्शनकाले सामान्यप्रत्ययस्याभावाद्विशेषप्रत्यय एवास्तीति चेत् न, तदापि सद्द्रव्यत्वादिसामान्यप्रत्ययस्य सद्भावादुभयप्रत्ययसिद्धेः। प्रथममेकां गां पश्यन्नपि हि सदादिना सादृश्यं तत्रार्थांतरेण व्यवस्यत्येव अन्यथा तदभावप्रसगात्। प्रथममवग्रहे सामान्यस्यैव प्रतिभासनान्नोभयप्रत्यय सर्वत्रेति चायुक्तं, वर्णसंस्थानादिसमानपरिणामात्मनो वस्तुनोऽर्थांतराद्विसदृशपरिणामात्मनश्चावग्रहे प्रतिभासनात्। क्वचिदुभयप्रत्ययासत्त्वेपि वा न वस्तुनः सामान्यविशेषात्मकत्वविरोधः, प्रतिपुरुषं क्षयोपशमविशेषापेक्षया प्रत्ययस्याविर्भावात्। यथा वस्तुस्वभावं प्रत्ययोत्पत्तौ कस्यचिदनाद्यतवस्तुप्रत्ययप्रसगात् परस्य स्वर्गप्रापणशक्त्यादिनिर्णयानुषंगात्। ततो विशेषप्रत्ययाद्विशेषमुररीकुर्वता समानप्रत्ययात्सामान्यमुररीकर्तव्यमिति प्रतीतिप्रसिद्धा जातिर्निमित्तांतरं तथा द्रव्यं वक्ष्यमाणं गुणाः क्रिया च प्रतीतिसिद्धेति न तन्निमित्तांनरत्वमसिद्ध वक्त्रभिप्रायात् येन कल्पनारोपितानामेव जात्यादीनां शब्दैरभिधानात्कल्पनैव शब्दाना विषयः स्यात्, पंचतयी वा शब्दानां प्रवृत्तिरबाधिता न भवेत्॥

**जातिः सर्वस्य शब्दस्य पदार्थो नित्य इत्यसन्। व्यक्तिसंप्रत्ययाभावप्रसंगाद्भुवितः सदा॥१५॥**

कश्चिदाह। जातिरेव सर्वस्य शब्दस्यार्थः सर्वदानुवृत्तिप्रत्ययपरिच्छेद्ये वस्तुस्वभावे शाब्दव्यवहारदर्शनात्। यथैव हि गोरिति शब्दोनुवृत्तिप्रत्ययविषये गोत्वे प्रवर्तते इति जातिस्तथा शुक्लशब्दस्तथाविधे शुक्लत्वे प्रवर्तमानो न गुणशब्दः। चरतिशब्दश्चरणसामान्ये प्रवृत्तो न क्रियाशब्दः, विषाणीति शब्दोपि विषाणित्वसामान्ये वृत्तिमात्रसमवायिद्रव्यशब्दः, दडीति शब्दश्च दंडित्वसामान्ये वृत्तिमुपगच्छन्न संयोगिद्रव्यशब्दः, डित्थशब्दोपि बालकुमारयुवमध्यस्थविरडित्थावस्थासु प्रतीयमाने डित्थत्वसामान्ये प्रवर्तमानो न यदृच्छाशब्दः। कथं जातिशब्दो जातिविषयः स्याज्जातौ जात्यंतरस्याभावादन्यथानवस्थानुषंगादिति च न चोद्यं, जातिष्वपि जात्यंतरस्योपगमाज्जातीनामानंत्यात्। यथाकांक्षाक्षयं व्यवहारपरिसमाप्तेरनवस्थानासंभवात्। कालो दिगाकाशमिति शब्दाः कथं जातिविषयाः कालादिषु जातेरसंभवात्तेषामेक-

द्रव्यत्वादित्यपि न शंकनीयं, कालशब्दस्य त्रुटिलवादिकालभेदेष्वनुस्यूतप्रत्ययावच्छेद्ये कालत्वसामान्ये प्रवर्तनात्। पूर्वापरादिदिग्भेदेष्वन्वयज्ञानगम्ये दिक्त्वसामान्ये दिक्छब्दस्य प्रवृत्तेः। पाटलिपुत्रचित्रकूटाद्याकाशभेदेष्वनुस्यूतप्रतीतिगोचरे चाकाशसामान्ये प्रवर्तमानस्याकाशशब्दस्य संप्रत्ययाजातिशब्दत्वोपपत्तेः। कालादीनामुपचरिता एव भेदा न परमार्थसंत इति दर्शनेन तज्जातिरप्युपचरिता तेष्वस्तु। तथा च उपचरितजातिशब्दाः कालादय इति न व्यक्तिशब्दाः। कथमतत्त्वशब्दो जातौ प्रवर्तत इति च नोपालंभः, तत्त्वसामान्यस्यैव विचारितस्यातत्त्वशब्देनाभिधानात्। तदुक्तं। "न तत्त्वातत्त्वयोर्भेद इति वृद्धेभ्य आगमः। अतत्त्वमिति मन्यते तत्त्वमेवाविभावितम्॥" इति। एतेन प्रागभावादिशब्दानां भावसामान्ये वृत्तिरुक्ता, प्रागभावादीनां भावस्वभावत्वादन्यथा निरुपाख्यत्वापत्तेरिति। तदेतदसत्यम्। सर्वदा जातिशब्दाद्व्यक्तिसंप्रत्ययस्याभावानुषंगात्। तथा चार्थक्रियार्थिनः प्रतिपत्तॄन् प्रति शब्दप्रयोगोनर्थकः स्यात्। ततः प्रतीयमानया जात्याभिप्रेतार्थस्य वाहदोहादेरसंपादनात्। स्वविषयज्ञानमात्रार्थक्रियायाः संपादनाददोष इति चेन्न, तद्विज्ञानमात्रेण व्यवहारिणः प्रयोजनाभावात्। न शब्दजातौ लक्षितायामर्थक्रियार्थिनां व्यक्तौ प्रवृत्तिरुत्पद्यते अति प्रसगात्॥

**शब्देन लक्षिता जातिर्व्यक्तीर्लक्षयति स्वकाः। संबंधादित्यपि व्यक्तमशब्दार्थज्ञतेहितम्॥१६**
**तथाह्यनुमितेरर्थो व्यक्तिर्जातिः पुनर्ध्वनेः। कान्यथाक्षार्थताबाधा शब्दार्थस्यापि सिध्यतु १७**
**अक्षेणानुगतः शब्दो जातिं प्रत्याययेदिह। संबंधात् सापि निःशेषा स्वव्यक्तीरिति तन्नयः १८**

द्रव्यत्वजातिः शब्देन लक्षिता द्रव्यं लक्षयति तत्र तस्याः समवायात्। गुणत्वजातिर्गुणं कर्मत्वजातिः कर्म। तत एव द्रव्यं तु समवेतसमवायात्प्रत्याययति। विवक्षासामान्यं तु शब्दात्प्रतीतं विवक्षितार्थं संयुक्तसमवायादेरित्येतदशब्दार्थज्ञताया एव विजृंभितं। द्रव्यगुणकर्मणा विवक्षितार्थानां चैवमनुमेयानां शब्दार्थत्वाभिधानात्। शब्दात्परंपरया तेषां प्रतीयमानत्वात् शब्दार्थत्वे कथमक्षार्थता न स्यादक्षात्परंपरायाः प्रतीयमानत्वात्। शब्दो हि श्रोत्रेणावगतो जातिं प्रत्याययति सापि स्वव्यक्तीरिति सर्वः शब्दार्थोक्षार्थ एव। तथानुमानार्थोः करणेन प्रतीताल्लिगाल्लिंगिनि ज्ञानोत्पत्तेः। एतेनार्थापत्त्यादिपरिच्छेद्यस्यार्थस्याक्षार्थताप्रसक्तिर्व्याख्याता, पारंपर्येणाक्षात्परिच्छिद्यमानत्वाविशेषादित्यक्षार्थ एव शब्दो निर्बाधः स्यान्न शब्दाद्यर्थः सामान्यशब्दार्थवादिनो न चैवं प्रसिद्धः॥

**यद्यस्पष्टावभासित्वाच्छब्दार्थः कश्चनेष्यते। लिंगार्थोपि तदा प्राप्तः शब्दार्थो नान्यथा स्थितिः १९**

शब्दात्प्रतीता जातिर्जात्या वा लक्षिता व्यक्तिः शब्दार्थ एवास्पष्टावभासित्वादित्ययुक्तं, लिंगार्थेन व्यभिचारात्। तस्यापि पक्षीकरणे लिंगार्थयोः स्थित्ययोगात्॥

**यत्र शब्दात्प्रतीतिः स्यात्सोर्थः शब्दस्य चेन्ननु। व्यक्तेः शब्दार्थता न स्यादेवं लिंगात्प्रतीतितः२०**

शब्दादेव प्रतीयमानं शब्दार्थमभिप्रेत्य शब्दलक्षितात्सामान्याल्लिंगात् प्रतीयमानां व्यक्तिं शब्दार्थमाचक्षाणः कथ स्वस्थः, परंपरया शब्दात्प्रतीयमानत्वात्तस्याः शब्दार्थत्वेक्षार्थता कथ बाध्यते तथाक्षेणापि प्रतीयमानत्वादुपचारस्योभयत्राविशेषात्। नच लक्षितलक्षणयापि शब्दव्यक्तौ प्रवृत्तिः संभवतीत्याह;—

**शब्दप्रतीतया जात्या न च व्यक्तिः स्वरूपतः। प्रत्येतुं शक्यते तस्याः सामान्याकारतो गतेः॥२१**
**व्यक्तिसामान्यतो व्यक्तिप्रतीतावनवस्थितेः। क विशेषे प्रवृत्तिः स्यात्पारंपर्येण शब्दतः॥ २२॥**

शब्दलक्षणतया हि जात्या व्यक्तेः प्रतिपत्तुरनुमानमर्थापत्तिर्वा? प्रथमपक्षे न तस्याः व्यक्तेः स्वरूपेणा-

साधारणेनार्थक्रियासमर्थेन प्रतीतिस्तेन जातेर्व्याप्त्यसिद्धेरन्वयात्तदतरेणापि व्यक्त्यंतरेषूपलब्धेर्व्यभिचाराच्च, सामान्यरूपेण तु तत्प्रतिपत्तौ नाभिमतव्यक्तौ प्रवृत्तिरतिप्रसंगात् । यदि पुनर्जातिलक्षितव्यक्तिसामान्यादभिमतव्यक्तेः प्रतीतिस्तदा साप्यनुमानमर्थापत्तिर्वेति स एव पर्यनुयोगस्तदेव चानुमानपक्षे दूषणमित्यनवस्थान शब्दप्रतीतया जात्या व्यक्तेः प्रतिपत्तिरेवेति चेत्, प्रतिनियतरूपेण सामान्यरूपेण वा ' न तावदादिविकल्पस्तेन सह जातेरविनाभावाप्रसिद्धेः । द्वितीयविकल्पे तु नाभिमतव्यक्तौ प्रवृत्तिरित्यनुमानपक्षभावी दोष. । सामान्यविशेषस्यानुमानार्थत्वाददोष इत्यपरः । तस्यापि शब्दार्थो जातिमात्र मा भूत् सामान्यविशेषस्यैव तदर्थतोपपत्ते. । सकेतस्य तत्रैव ग्रहीतुं शक्यत्वात् । तथा च शब्दात्प्रत्यक्षादेरिव सामान्यविशेषात्मनि वस्तुनि प्रवृत्ते परमतसिद्धेर्न जातिरेव शब्दार्थ ॥

**द्रव्यमेव पदार्थोस्तु नित्यमित्यप्यसंगतम् । तत्रानंत्येन संकेतक्रियायुक्तेरनन्वयात् ॥ २३ ॥**
**वांछितार्थप्रवृत्त्यादिव्यवहारस्य हानितः । शब्दस्याक्षादिसामर्थ्यादेव तत्र प्रवृत्तितः ॥ २४ ॥**

न हि क्षणिकस्वलक्षणमेव शब्दस्य विषयस्तत्र साकल्येन सकेतस्य कर्तुमशक्तेरानंत्यादेकत्र सकेतकरणे अनन्वयादभिमतार्थे प्रवृत्त्यादिव्यवहारस्य विरोधात । स्वयमप्रतिपन्ने स्वलक्षणे सकेतस्यासभवाच्च । वाचकाना प्रत्यक्षादिभिः प्रतिपन्नेक्षादिसामर्थ्यादेव प्रवृत्तिसिद्धेः । प्रतिपत्तुः शब्दार्थापेक्षयानर्थक्यात् कि तु द्रव्यनित्यमपि तस्यानंत्याविशेषात । स्यान्मतं । तत्र साकल्येन संकेतस्य करणमशक्ते । किं तर्हि क्वचिदेकत्र न चानन्वयोस्य सकेतव्यवहारकालव्यापित्वान्नित्यत्वादिति । तदसगत । कर्के सकेतितादश्वशब्दाच्छोणादौ प्रवृत्त्यभावप्रसगात् तत्र तस्यानन्वयात् । न च प्रतिपाद्यप्रतिपादकाभ्यामध्यक्षादिना नित्येपि कर्के प्रतिपन्ने वाचकस्य सकेतकरण किंचिदर्थं पुष्णाति प्रत्यक्षादेरेव तत्र प्रवृत्त्यादिसिद्धेः । स्वय ताभ्यामप्रतिपन्ने तु कुत सकेतो वाचकस्यातिप्रसगात । केचिदाहु । न नाना द्रव्य नित्यं शब्दस्यार्थः किंत्वेकमेव प्रधानं तस्यैवात्मा वस्तुस्वभावः शरीरं तत्त्वमित्यादिपर्यायशब्दैरभिधानात् । यथैकोयमात्मोदकं नामेत्यात्मशब्दो द्रव्यवचनो दृष्ट । वस्त्वेक तेज इति जल नामैक स्वभावः शरीरं तत्त्वमिति च दर्शनानतिक्रमात् । यथा च द्रव्यमात्मेत्यादय शब्दपर्याया द्रव्यस्य वाचकास्तथान्येपि सर्वे रूपादिशब्दाः प्रत्यस्तमयादिशब्दाश्च कथंचित्सदापन्नाः सर्वे शब्दा द्रव्यस्याद्वयस्य वाचकाः शब्दत्वाद्द्रव्यमात्मेत्यादिशब्दवत् । तदुक्त । "आत्मा वस्तुस्वभावश्च शरीरं तत्त्वमित्यपि । द्रव्यमित्यस्य पर्यायास्तच्च नित्यमिति स्मृतम् ॥" इति । न च नित्यशब्देनोदयास्तमयशब्दाभ्यामद्रव्यशब्देन व्यभिचारस्तद्विपरीतार्थाभिधायकत्वादिति न मंतव्यं, द्रव्योपाधिभूतरूपादिविषयत्वादनित्यादिशब्दाना रूपादयो ह्युत्पद्यते वियंति चेत्यनित्याः द्रव्यत्वाभावाच्चाद्रव्यत्वमिति कथ्यंते । न चोपाधिविषयत्वादमीषां शब्दानामद्रव्यविषयत्व येन तैः साधनस्य व्यभिचार एव सत्यस्यैव वस्तुनस्तैरसत्यैराकारैरवधार्यमाणत्वादसत्योपाधिभि. शब्दैरपि सत्याभिधानोपपत्तेः । तदप्यभिधायि । "सत्य वस्तु तदाकारैरसत्यैरवधार्यते । असत्योपाधिभिः शब्दै सत्यमेवाभिधीयते ॥" कथ पुनरसत्यानुपाधीनभिधाय तदुपाधीना सत्यमभिदधानाः शब्दा द्रव्यविषया एव तदुपाधीनामपि तद्विषयत्वात् अन्यथा नोपाधिव्यवच्छिन्न वस्तुशब्दार्थः इति न चोद्यं, कतरद्देवदत्तस्य गृहमदो यत्रासौ काक इति स्वामिविशेषावच्छिन्नगृहप्रतिपत्तौ काकसबधस्य निबंधनत्वेनोपादानेपि तत्र वर्तमानस्य गृहशब्दस्याभिधेयत्वेन काकानपेक्षणात् । रुचकादिशब्दाना च रुचकवर्धमानस्वस्तिकाद्याकारैरपायिभिरुपहित सुवर्णद्रव्यमभिदधतामपि शुद्धसुवर्णविषयतोपपत्तेः । तदुक्तं । "अध्रुवेण निमित्तेन देवदत्तगृहं यथा । गृहीत गृहशब्देन शुद्धमेवाभिधीयते ॥" "सुवर्णादि यथा युक्त स्वैराकारैरपायिभि. । रुचकाद्यभिधानाना शुद्धमेवेति वाच्यताम् ॥" इति ।

तद्वद्रूपाद्युपाधिभिरुपधीयमानद्रव्यस्य रूपादिशब्दैरभिधानेपि शुद्धस्य द्रव्यस्यैवाभिधानसिद्धेर्न तेषामद्रव्यविषयत्वं तदुपाधीनामसत्यत्वाद् गृहस्य काकाद्युपाधिवत्, सुवर्णस्य रुचकाद्याकारोपाधिवच्च। सत्यत्वे पुनरुपाधीनां रूपाद्युपाधीनामपि सत्यत्वप्रसंगात् तथा तदुपाधीनामित्यनवस्थानमेव स्यात्, उपाधितद्वतोरव्यवस्थानात्। भ्रांतत्वे पुनरुपाधीनां द्रव्योपाधीनामसत्यत्वमस्तु तद्व्यतिरेकेण तेषां संभवात् स्वयमसंभवतां शब्दैरभिधाने तेषां निर्विषयत्वप्रसंगादिति सविषयत्वं शब्दानामिच्छता शुद्धद्रव्यविषयत्वमेष्टव्यं, तस्य सर्वत्र सर्वदा व्यभिचाराभावादुपाधीनामेव व्यभिचारात्। न च व्यभिचारिणामप्युपाधीनामभिधायकाः शब्दाः सविषयाणामस्वप्नादिप्रत्ययानां स्वप्नविषयत्वप्रसंगात् इति शुद्धद्रव्यपदार्थवादिनः। तेपि न परीक्षकाः। सर्वशब्दानां स्वरूपमात्राभिधायित्वप्रसगात्। परेपि ह्येवं वदेयुः। सर्वे विवादापन्नाः शब्दाः स्वरूपमात्रस्य प्रकाशकाः शब्दत्वान्मेघशब्दवदिति। नन्विदमनुमानवाक्यं यदि स्वरूपातिरिक्तं साध्यं प्रकाशयति तदानेनैव व्यभिचारः साधनस्य। नोचेत् कथमतः साध्यसिद्धिरतिप्रसंगादिति दूषणं शुद्धद्रव्याद्वैतवाचकत्वसाधनेपि समान। तद्वाक्येनापि द्रव्यमात्राद्व्यतिरिक्तस्य तद्वाचकत्वस्य शब्दधर्मस्य प्रकाशने तेनैव हेतोर्व्यभिचारात्। तदप्रकाशने साध्यसिद्धेरयोगात्। द्रव्याद्वैतवादिनः शब्दस्य तद्वाचकत्वधर्मस्य परमार्थतो द्रव्यादव्यतिरिक्तत्वात् साधनवाक्येन तत्प्रकाशनेपि न हेतोर्व्यभिचार इति चेत् तर्हि शब्दाद्वैतवादिनोपि सुतरां प्रकृतसाधनवाक्येन न व्यभिचारः, स्वरूपमात्राभिधायकस्य साध्यस्य शब्दधर्मस्य शब्दादव्यतिरिक्तस्य तेन साधनात् द्रव्यमात्रे शब्दस्य प्रवेशनेन तद्धर्मस्यापि तत्र पारंपर्यानुषक्तेः परिहरणात्। ननु शब्दाद्वैते कथं वाच्यवाचकभाव. शुद्धद्रव्याद्वैते कथं? कल्पनामात्रादिति चेत्, इतरत्र समानं। यथैव ह्यात्मा वस्तुस्वभावः शरीरं तत्त्वमित्यादयः पर्याया द्रव्यस्यैवं कथ्यंते तदा शब्दस्यैव ते पर्याया इत्यपि शक्यं कथयितुमविशेषात्। ननु च जातिद्रव्यगुणकर्माणि शब्देभ्यः प्रतीयंते न च तानि शब्दस्वरूपं श्रोत्रग्राह्यत्वाभावादित्यपि न चोद्यं, जात्यादिभिराकारैरसत्यैरेव सत्यस्य शब्दस्वरूपस्यावधार्यमाणत्वात्। तच्छब्दैश्चासत्योपाधिवशाद्भेदमनुभवद्भिस्तस्यैवाभिधानात्। न च जात्याद्युपाधिकथनद्वारेण तदुपाधिशब्दस्वरूपाभिधानाद्, अन्यथा तदुपाधिव्यवच्छिन्नशब्दरूपप्रकाशनासभवात्। जात्यादिशब्दा जात्याद्युपाधिप्रतिपादका एवेति न शंकनीय, जात्याद्युपाधीनामसत्यत्वात् गृहस्य काकादिवत्सुवर्णस्य रुचकाद्याकारोपाधिवच्च। न च जात्याद्युपाधयः सत्या एव तदुपाधीनामपि सत्यत्वापत्तेः उपाधितद्वतोः क्वचिद्व्यवस्थानायोगात्। तदुपाधीनामसत्यत्वे मौलोपाधीनामप्यसत्यत्वानुषंगात्। न चासत्यानामुपाधीनां प्रकाशकाः शब्दाः सत्या नाम निर्विषयत्वात्। ततः सविषयत्वं शब्दस्येच्छता स्वरूपमात्रविषयत्वमेषितव्यं, तस्य तत्राव्यभिचारात्। जात्यादिशब्दानां तु जात्याद्यभावेपि भावाद्व्यभिचारदर्शनात्। न हि गौरश्व इत्यादयः शब्दा गोत्वाश्वत्वादिजात्यभावेपि वाहकादौ न प्रवर्तंते। तत्रोपचारात् प्रवर्तंत इति चेन्नापरागतयोपि यत्र क्वचन तेषा प्रवर्तनात्। तथा द्रव्यशब्दा दंडीविषाणीत्यादयो गुणशब्दाः शुक्लादयश्चरत्यादयश्च क्रियाशब्दाः द्रव्यादिव्यभिचारिणोभ्यूह्याः। सन्मात्रं न व्यभिचरंतीति चेत् न, असत्यपि सत्ताभिधायिनां शब्दाना प्रवृत्तिदर्शनात्। न किंचित्सदस्तीत्युपयन् सदेव सर्वमिति ब्रुवाणः कथं स्वस्थो नाम, ततोनर्थांतरे गुणादाविव शुद्धद्रव्येपि शब्दस्य व्यभिचारात् स्वरूपमात्राभिधायित्वमेव श्रेय इतीतरे। तकेत्र प्रष्टव्याः। कथममी शब्दाः स्वरूपमात्रं प्रकाशयंतो रूपादिभ्यो भिद्येरन्? तेषामपि स्वरूपमात्रप्रकाशने व्यभिचाराभावात्। न स्वरूपप्रकाशिनो रूपादयोऽचेतनत्वादिति चेत्, किं वै शब्दश्चेतनः' परमब्रह्मस्वभावत्वात् शब्दज्योतिषश्चेतनत्वमेवेति चेत्, रूपादयः किं न तत्स्वभावाः? परमार्थतस्तेषामसत्त्वात्। अतत्स्वभावा एवेति चेत्, शब्दज्योतिरपि तत एव तत्स्वभावं मा

भूत्। तस्य सत्यत्वे वा द्वैतसिद्धिः शब्दज्योतिःपरमब्रह्मणोः स्वभावतद्वतोर्वस्तुसतोर्भावात् शब्दज्योति-ष्मत्यमपि परमब्रह्मणोधिगत्युपायत्वात्तत्स्वरूपमुच्यते "शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छतीति" वचनात्। न तथा रूपादय इति चेत् कथमसत्यं तद्वदधिगतिनिमित्तं? रूपादीनामपि तथानुपगमाभावात्। तस्य विद्यानुकूलत्वाद्भावनाप्रकर्षसात्मीभावे विद्यावभासमर्थकारणता न तु रूपादीनामिति चेत्, रूपादयः कुतो न विद्यानुकूला? भेदव्यवहारस्याविद्यात्मनः कारणत्वादिति चेन्, तत एव शब्दोपि विद्यानुकूलो मा भूत्। गुरुणोपदिष्टस्य तस्य रागादिप्रशमहेतुत्वाद्विद्यानुकूलत्वे रूपादीना तथैव तदस्तु विशेषाभावात्। तेषामनिर्दिश्यत्वान्न गुरूपदिष्टत्वसभव इति चेत् न, स्वमतविरोधात्। "न सोस्ति प्रत्ययो लोके यः शब्दानुगमादृते। अनुविद्धमिवाभाति सर्वं शब्दे प्रतिष्ठितम्॥" इति वचनात्। शाब्दः प्रत्ययः सर्वः शब्दान्वितो नान्य इति चायुक्तं, श्रोत्रजशब्दप्रत्ययस्याशब्दान्वितत्वप्रसक्तेः स्वाभिधानविशेषात् प्रत्यक्ष एवार्थ प्रत्ययैर्निश्चीयत इत्यभ्युपगमाच्च। ननु च रूपादयः शब्दान्नार्थांतरं तेषा तद्विवर्तत्वात्। ततो न ते गुरुणोपदिश्यंते येन विद्यानुकूलाः स्युरिति चेत्, तर्हि शब्दोपि परमब्रह्मणो नान्य इति कथं गुरुणोपदेश्यः। ततो भेदेन प्रकल्प्य शब्द गुरुरुपदिशतीति चेत्, रूपादीनपि तथोपदिशतु। तथा च शब्दाद्वैतमुपायतत्त्व परमब्रह्मणो न पुना रूपाद्वैतं रसाद्वैतादि चेति ब्रुवाणो न प्रेक्षावान्। ननु च लोके शब्दस्य परप्रतिपादनोपायत्वेन सुप्रतीतत्वात् सुघटस्तस्य गुरूपदेशो न तु रूपादीनामिति चेत् न, तेषामपि स्वप्रतिपत्त्युपायतया हि प्रतीतत्वात्। तद्विज्ञानं स्वप्रतिपत्त्युपायो न त एवेति चेत् तर्हि शब्दज्ञानं परस्य प्रतिपत्त्युपायो न शब्द इति समानं। परंपरया शब्दस्य प्रतिपत्त्युपायत्वे रूपादीनां सुप्रतिपत्त्युपायतास्तु। न हि धूमादिरूपादीना विज्ञानात् पावकादिप्रतिपत्तिर्जनस्याप्रसिद्धा। शब्दः साक्षात्परप्रतिपत्त्युपायस्तस्य प्रतिभासादभिन्नत्वादिति चेत्, तत एव रूपादयः साक्षात्स्वप्रतिपत्तिहेतवः सन्तु। एवं च यथा श्रोत्रप्रतिभासादभिन्नः शब्दस्तत्समानाधिकरणतया संवेदनाच्छ्रोत्रप्रतिभासश्च परमब्रह्म तत्त्वविकल्पाच्छब्दात् सोपि च ब्रह्मतत्त्वात्संवेदनमात्रलक्षणादव्यभिचारिस्वरूपादिति। ततः परमब्रह्मसिद्धि। तथा रूपादयः स्वप्रतिभासादभिन्नाः, सोपि प्रतिभासमात्रविकल्पालिंगात्, सोपि च परमात्मनः स्वसंवेदनमात्रलक्षणादिति न शब्दाद्रूपादीना कचन विशेषमुत्पश्यामः। सर्वथा तमपश्यंतश्च शब्द एव स्वरूपप्रकाशनो न तु रूपादयः, स एव परमब्रह्मणोधिगमोपायस्तत्स्वभावो वा न पुनस्त इति कथं प्रतिपद्येमहि। अत्रापरः प्राह। पुरुषाद्वैतमेवास्तु पदार्थ प्रधानशब्दब्रह्मादेस्तत्स्वभावत्वात्तस्यैव विधिरूपस्य नित्यद्रव्यत्वादिति। तदप्यसारं। तदन्यापोहस्य पदार्थत्वसिद्धेः। शब्दो हि ब्रह्म ब्रुवाणः स्वप्रतिपक्षादपोढ ब्रूयात्। किं वान्यथा प्रथमपक्षे विधिप्रतिषेधात्मनो वस्तुनः पदार्थत्वसिद्धिः। द्वितीय-पक्षेपि सैव, स्वप्रतिपक्षादव्यावृत्तस्य परमात्मनः शब्देनाभिधानात्। तद्विधिरेवान्यनिषेध इति चेत्, तदन्यप्रतिषेध एव तद्विधिरस्तु। तथा चान्यापोह एव पदार्थः स्यात् स्वरूपस्य विधेस्तदपोह इति नाम-मात्रभेदादर्थो न भिद्यते एव यतोनिष्टसिद्धिः स्यादिति चेत। न। अन्यापोहस्यान्यार्थापेक्षत्वात् स्वरूप-विधेः परानपेक्षत्वादर्थभेदगतेः। परमात्मन्यद्वये सति ततोन्यस्यार्थस्याभावात् कथं तदपेक्षयान्यापोह इति चेत् न। परपरिकल्पितस्यावश्याभ्युपगमनीयत्वात्। सोप्यविद्यात्मक एवेति चेत्, किमविद्यातोपोहस्तद-पेक्षो नेष्टः? सोप्यविद्यात्मक एवेति चेत् तर्हि तत्त्वतो नाविद्यातोपोहः परमात्मन इति कुतोविद्यात्वं येन स एव पदस्यार्थो नित्यः प्रतिष्ठेत। सत्यपि च परमात्मनि संवेदनात्मन्यद्वये कथं शब्दविषयत्वं? स्वसंवेदनादेव तस्य प्रसिद्धेस्तत्प्रतिपत्तये शब्दवैयर्थ्यात्। ततो मिथ्याप्रवाद एवायं नित्यं द्रव्यं पदार्थ इति॥

**व्यक्तावेकत्र शब्देन निर्णीतायां कथंचन । तद्विशेषणभूताया जातेः संप्रत्ययः स्वतः ॥ २५ ॥**
**गुडशब्दाद्यथा ज्ञाने गुडे माधुर्यनिर्णयः । स्वतः प्रतीयते लोके प्रोक्तो निंबे च तिक्तता ॥२६॥**
**प्रतीतया पुनर्जात्या विशिष्टां व्यक्तिमीहिताम् । यां यां पश्यति तत्रायं प्रवर्तेतार्थसिद्धये ॥२७॥**
**तथा च सकलः शाब्दव्यवहारः प्रसिद्ध्यति । प्रतीतेर्बाधशून्यत्वादित्येके संप्रचक्षते ॥ २८ ॥**

न प्रधानं शुद्धद्रव्यं शब्दतत्त्वमात्मतत्त्वं वाद्वय पदार्थः प्रतीतिबाधितत्वात् । नापि भेदवादिनां नानाव्यक्तिषु नित्यासु वाक्शब्दस्य प्रवृत्तिः तत्र संकेतकरणासंभवादिदोषावतारात् । किं तर्हि ? व्यक्तावेकस्यां शब्दः प्रवर्तते शृंगग्राहिकया परोपदेशाल्लिंगदर्शनाद्वा तस्यां ततो निर्णीतायां तद्विशेषणभूतायां जातौ स्वत एव निश्चयो यथा गुडादिशब्दाद्गुडादेर्निर्णये तद्विशेषणे माधुर्यादौ तथाभ्यासादिवशाल्लोके संप्रत्ययात् । ततः स्वनिश्चतया जात्या विशिष्टामभिप्रेतां यां व्यक्तिं पश्यति तत्र तत्रेष्टसिद्धये प्रवर्तते । तावता च सकलशाब्दव्यवहारः सिद्ध्यति बाधकाभावादिति व्यक्तिपदार्थवादिनः प्राहुः ॥

**तदप्यसंगतं जातिप्रतीतेर्वृत्तिसंभवे । शब्देनाजन्यमानायाः शब्दवृत्तिविरोधतः ॥ २९ ॥**
**पारंपर्येण चेच्छब्दात्सा वृत्तिः करणान्न किम् । ततो न शब्दतो वृत्तिरेषां स्याज्जातिवादिवत् ३०**

प्रतीतायामपि शब्दाद्व्यक्तावेकत्र यावत् स्वतस्तज्जातिर्न प्रतीता न तावत्तद्विशिष्टां व्यक्तिं प्रतीत्य कश्चित् प्रवर्तते इति । जातिप्रत्ययादेव प्रवृत्तिसंभवे शब्दात् सा प्रवृत्तिरिति विरुद्धं, जातिप्रत्ययस्य शब्देनाजन्यमानत्वात् । शब्दाद्व्यक्तिप्रतीतिभावे तद्विशेषणभूताया जातेः संप्रत्ययात्तत एव जातिर्गम्यत एवेति चेत्, कथमेवं व्यक्तिवज्जातिरपि शब्दार्थो न स्यात् ? तस्याः शब्दतोऽश्रूयमाणत्वादिति चेत्, किमिदानीं शब्दतो गम्यमानोर्थः शब्दस्याविषयः । प्रधानभावेनाविषय एवेति चेन्न, गम्यमानस्यापि प्रधानभावदर्शनात् यथा गुडशब्दाद्गम्यमानं माधुर्यं पित्तोपशमनप्रकरणे । न चात्र जातेरप्रधानत्वमुचितं तत्प्रतीतिमंतरेण प्रवृत्त्यर्थिनः प्रवृत्त्यनुपपत्तेः । यदि पुनर्जातिः शब्दाद्गम्यमानापि नेष्यते तत्प्रत्ययस्याभ्यासादिवशादेवोत्पत्तेस्तदा कथमशब्दाज्जातिप्रत्ययान्न प्रवृत्तिः ? पारंपर्येण शब्दात् सा प्रवृत्तिरिति चेत्, करणात् किं न स्यात् ? यथैव हि शब्दाद्व्यक्तिप्रतीतिस्ततो जातिप्रत्ययस्ततस्तद्विशिष्टे हि तद्व्यक्तौ संप्रत्ययात्प्रवृत्तिरिति शब्दमूला सा तथा शब्दस्याप्यक्षात्प्रतीतेरक्षमूलास्तु तथा व्यवहारान्नैवमिति चेत्, समानमन्यत्र । ततो न व्यक्तिपदार्थवादिनां जातिपदार्थवादिनामिव शब्दात्समीहितार्थे प्रवृत्तिः शब्देनापरिच्छिन्न एव तत्र तेषां प्रवर्तनात् ॥

**एतेन तद्द्वयस्यैव पदार्थत्वं निवारितम् । पक्षे द्वयोक्तदोषस्याशक्तेः स्याद्वादविद्विषाम् ॥३१॥**

न हि जातिव्यक्ती परमभिन्ने भिन्ने वा सर्वथा संभाव्येते येन पदार्थत्वेन युगपत्प्रतीमः । येन स्वभावेन भिन्ने तेनैवाभिन्ने इत्यपि विरुद्धं, क्रमेण जातिव्यक्त्योः परस्परानपेक्षयोः पदार्थत्वे पक्षद्वयोक्तदोषासक्तिः । क्वचिज्जातिशब्दात् प्रतीत्य लक्षणया व्यक्तिं प्रतिपद्यते, क्वचिद्व्यक्तिं प्रतीत्य जातिमिति हि जातिव्यक्तिपदार्थवादिपक्षादेवासक्तजातिव्यक्त्यात्मवस्तुनः पदार्थत्वे किमनेन स्याद्वादविद्वेषेण । केचिदत्राकृतिपदार्थवादिनः प्राहुः ॥

**लोहिताकृतिमाचष्टे यथोक्तो लोहितध्वनिः । लोहिताकृत्यधिष्ठाने विभागाल्लोहिते गुणे ॥ ३२ ॥**
**तदावेशात्तथा तत्र प्रत्ययस्य समुद्भवात् । द्रव्ये च समवायेन प्रसूयेत तदाश्रये ॥ ३३ ॥**
**गुणे समास्तत्वेन समवायात्तदाकृतेः । संयुक्तसमवेते च द्रव्येन्यत्रोपपादयेत् ॥ ३४ ॥**
**लोहितप्रत्ययं रक्तवस्त्रद्वयवृतेपि च । तथा गौरिति शब्दोपि कथयत्याकृतिं स्वतः ॥ ३५ ॥**

**गोत्वरूपात्तदावेशात्तदधिष्ठान एव तु । तदाश्रये च गोपिंडे गोबुद्धिं कुरुतेंजसा ॥ ३६ ॥**

कस्मात् पुनर्गुणे द्रव्ये द्रव्यांतरे च प्रत्ययं कुर्वन्नाकृतेरभिधायकः शब्द इति न चोद्यं. लोहितशब्दो ह्यर्थान्तरनिरपेक्षो गुणसामान्ये स्वरूपं प्रतिलब्धस्वरूपः तदधिष्ठानो यदा न गुणस्य लोहितस्य नाप्यलोहितत्वेन व्यावेशात्प्रत्यायनं करोति तदा विभागाभावादाकृत्यधिष्ठान एव । स तु गुणे प्रत्ययमादधतीत्याकृतिमभिधत्ते । यथोपाश्रयविशेषान् स्फटिकमणि तद्गुणमुपलभ्यमानमध्यक्ष स्फटिकमणेरेव प्रकाशकं तदधिष्ठानस्य परोपहितगुणव्यावेशादविभागेन तद्गुणत्वप्रत्ययजननात् । एवं द्रव्यमभिदधानो लोहितशब्दः स्वाभिधेयलोहितत्वाकृतेर्लोहितगुणे समवेतायास्तस्य च द्रव्ये समवेतत्वादाकृत्यधिष्ठान एव तत्समवेतसमवायाद्गुणव्यवहितेऽपि द्रव्ये लोहितप्रत्ययमुपपादयेत, एवमन्यत्र द्रव्ये लोहितद्रव्यस्य संयुक्तत्वात् तत्र च लोहितगुणस्य समवेतत्वात् तत्र च लोहिताकृतेः समवायात् संयुक्तसमवेतसमवायात्तरमुपजनयेत । एवं तु वस्त्रद्वयवृत्ते शुक्ले वस्त्रे संयुक्तसमवेतसमवायादिति यथा प्रतीतं लोके तथा गौरिति शब्दादपि स्वतो गोत्वस्वरूपामाकृतिं कथयति तत्र प्रतिलब्धस्वरूपस्तदधिष्ठान एव तद्गोपिंडे गोप्रत्ययं करोत्यविभागेन तस्य तदावेशात् ॥

**एवं पचतिशब्दोऽधिश्रयणादिक्रियागतैः । सामान्यैः सममेकार्थसमवेतं प्रबोधयेत् ॥ ३७ ॥**
**व्यापकं पचिसामान्यमधिश्रित्यादिकर्मणाम् । यथा भ्रमणसामान्यं भ्रमतीति ध्वनिर्जने ॥३८॥**

पचत्यादिशब्दः क्रियाप्रतिपादक एव नाकृतिविषय इति मा मंस्थाः स्वयमाकृत्यधिष्ठानस्य तस्य पचनादिक्रियाप्रत्ययहेतुत्वात् । पचतिशब्दो हि याः काश्चनाधिश्रयणादिक्रियास्तासां यानि प्रत्यर्थनियतान्यधिश्रयणत्वादिसामान्यानि तैः सहैकार्थे समवेतं यत्सर्वविषयं पचिसामान्यमभिव्यक्तं तत्प्रतिपादयति यथा भ्रमतिशब्दोऽनेककर्मविषयं भ्रमणसामान्यं लोके ॥

**तथा डित्थादिशब्दाश्च पूर्वापरविशेषगम् । यदृच्छत्वादिसामान्यं तस्यैव प्रतिबोधकाः ॥३९॥**

न हि डित्थो डवित्थ इत्यादयो यदृच्छाशब्दास्तैरपि डित्थत्वाद्याकृतेरभिधानात् ॥

**इत्येवमाकृतिं शब्दस्यार्थं ये नाम मेनिरे । तेनातिशेरते जातिवादिनं प्रोक्तनीतितः ॥ ४० ॥**
**जातिराकृतिरित्यर्थभेदाभावात्कथंचन । गुणत्वे त्वाकृतेर्व्यक्तिवाद एवास्थितो भवेत् ॥४१॥**

न सर्वा जातिराकृतिर्नापि गुणश्चतुरस्रादिसंस्थानलक्षणः । किं तर्हि ? संस्थानविशेषव्यंग्या जातिर्लोहितत्वगोत्वादिराकृतिः सा च संस्थानविशेषानभिव्यंग्याया सत्त्वादिजातेरन्या । न सर्वं संस्थानविशेषेणैव व्यंग्यं तद्रहिताकाशादिष्वपि भावात् । द्रव्यत्वमनेनानाख्येयमुक्तं तथा गुणेषु संस्थानविशेषाभावात् । तद्वदात्मत्वादि तदनभिव्यंग्यं बहुधा प्रत्येयं । गोत्वं पुनर्न सास्नादिसन्निवेशविशेषमंतरेण पिंडमात्रेण युज्यते अश्वादिपिंडेनापि तदभिव्यक्तिप्रसंगात् । तथा राजत्वमानुषत्वादि सर्वमिति कश्चित् । सोऽपि न विपश्चित् । लोहितत्वादेः संस्थानविशेषरहितेन लोहितादिगुणेन व्यवच्छेद्यमानत्वात् । पचत्यादिसामान्यस्य च पचनादिकर्मणा तादृशेन व्यंग्यत्वादाकृतित्वाभावानुषंगात् । सत्त्वादिजातेश्चाकृतित्वानभ्युपगमे कथमाकृतिरेव पदार्थ इत्येकांतः सिध्येत । जातिगुणकर्मणामपि पदार्थत्वसिद्धेर्व्यक्त्याकृतिजातयश्च पदार्थ इत्यभ्युपगच्छतामदोष इति चेन्न, तेषामपि कस्यचित् पदस्य व्यक्तिरेवार्थः कस्यचिदाकृतिरेव कस्यचिज्जातिरेवेत्येकांतोपगमात् पक्षत्रयोक्तदोषानुषक्तेः । किं च । संस्थानविशेषेण व्यज्यमानां जातिमाकृतिं वदतां कुतः संस्थानानां विशेषः सिध्येत येनाकृतीनां विशेषस्तद्व्यंग्यतयावतिष्ठेत । न तावत्स्वत एव तन्निश्चितिरतिप्रसंगात् । परस्माद्विशेषणाद्विशेषो निश्चीयते इति चेत्, तद्विशेषणस्यापि

कुतो विशेषोवसीयतां? परस्माद्विशेषणादिति चेदनवस्थानात् । संस्थानविशेषा प्रतिपत्तिरिति कथं तद्व्यंग्याकृतिविशेषनिश्चयः । यदि पुनराकृतिविशेषनिश्चयादेतदभिव्यंजकसंस्थानविशेषनिश्चयः स्यादिति मतं तदा परस्पराश्रयणं, संस्थानविशेषस्य निश्चये सत्याकृतिविशेषस्य निश्चयस्तन्निश्चये सति संस्थानविशेषनिश्चय इति । स्वत एवाकृतिविशेषस्य निश्चयाददोष इति चेत् न, संस्थानविशेषनिश्चयस्यापि स्वत एवानुषंगात् । प्रत्ययविशेषादाकृतिविशेषः संस्थानविशेषश्च निश्चीयत इति चेत् , कुतः प्रत्ययविशेषसिद्धिः? न तावत्स्वसंवेदनतः सिद्धांतविरोधात् । प्रत्ययांतराच्चेदनवस्था । विषयविशेषनिर्णयादिति चेत् . परस्पराश्रयण, विषयविशेषस्य सिद्धौ प्रत्ययविशेषस्य सिद्धिः तत्सिद्धौ च तत्सिद्धिरिति । न चैवं सर्वत्र विशेषव्यवस्थापह्नवः स्वसंविदितज्ञानवादिना प्रत्ययविशेषस्य स्वार्थव्यवसायात्मनः स्वतः सिद्धेः सर्वत्र विषयव्यवस्थोपपत्तेः । कथं चायमाकृतीनां गोत्वादीनां परस्परं विशिष्टकृतामपरविशेषेण विरहेोपि स्वयमुपपन्नः । गवादिव्यक्तीनां विशेषणवशादेव तामुपगच्छेत् तथा दृष्टत्वादिति चेत् न, तत्रैव विवादात् । तदविवादे वा व्यक्त्याकृत्यात्मकस्य वस्तुनः पदार्थत्वसिद्धिस्तथा दर्शनस्य सर्वत्र भावात् । योपि मन्यतेन्यापोहमात्रं शब्दस्यार्थ इति तस्यापि—

**यदि गौरित्ययं शब्दो विधत्तेन्यविवर्तनम् । विदधीत तदा गोत्वं तन्नान्यापोहगोचरः ॥४२॥**

स्वलक्षणमन्यस्मादपोह्यतेनेनेत्यन्यापोहो विकल्पस्तं यदि गोशब्दो विधत्ते तदा गामेव किं न विदध्यात् । तथा च नान्यापोहशब्दार्थः गोशब्देनागोनिवृत्तेः कल्पनात्मिकाया स्वयं विधानात् ॥

**अगोनिवृत्तिमप्यन्यनिवृत्तिमुखतो यदि । गोशब्दः कथयेन्नूनमनवस्था प्रसज्यते ॥ ४३ ॥**

न गौरगौरिति गोनिवृत्तिस्तावदेका ततो द्वितीया त्वगोनिवृत्तिस्ततोन्या तन्निवृत्तिस्तृतीया ततोन्यनिवृत्तिश्चतुर्थी यदि गोशब्देन कथ्यते तन्मुखेन गतिप्रवर्तनात् तदा सापि न गोशब्देन विधिप्राधान्येनाभिधेया द्वितीयनिवृत्तेरपि तथाविधेयत्वप्रसंगात् । गौरेव विधिसिद्धेः स्यान्यनिवृत्तिद्वारेणाभिधीयत इति चेत् , तर्हि ततोन्या पंचमी निवृत्तिस्ततो निवृत्तिः षष्ठी सा गोशब्दस्यार्थ इत्यनवस्था सुदूरमप्यनुसृत्य तद्विधिद्वारेणाश्रयणात् । निवृत्तिपरंपरायामेव शब्दस्य व्यापारात् शब्दो विवक्षां विधत्ते न पुनर्बहिरर्थमित्यभ्युपगमे कथमन्यापोहकृत्सर्वः शब्दः सर्वथा—

**वक्तुरिच्छां विधत्तेसौ बहिरर्थं न जातुचित् । शब्दोन्यापोहकृत्सर्वः यस्य वांध्यविजृंभितम् ॥४४॥**

यथैव हि शब्देन बहिरर्थस्य प्रकाशने तत्र प्रमाणांतरा वृत्तिः सर्वात्मना तद्वेदनेनार्थस्य निश्चितत्वान्निश्चिते समारोपाभावात् । तद्व्यवच्छेदेपि प्रमाणांतरस्याप्रवृत्तेर्वस्तुनो धर्मस्य कस्यचिन्निश्चये सर्वधर्मात्मकस्य धर्मिणो निश्चयात्सर्वग्रहापत्तेरन्यथा तदात्मकस्यैकधर्मस्यापि निश्चयानुपपत्तिस्ततो भिन्नस्य धर्मस्य निश्चये धर्मिणि प्रवृत्तिघटनात् तेन तस्य संबंधाभावादनुपकार्योपकारकत्वात् । तदुपकारे वा धर्मोपकारशक्त्यात्मकस्य धर्मिणो धर्मद्वारेण शब्दात् प्रतिपत्तौ सकलग्रहस्य तदवस्थत्वात्तदुपकारशक्तेरपि ततो भेदेनानवस्थानात् । प्रत्यक्षवद्वस्तुविषयस्य शब्दप्रत्ययस्य स्पष्टप्रतिभासप्रसंगाच्च न शब्दस्य तद्विषयत्वं तथैव वक्तृविवक्षायाः शब्देनाभिधाने विशेषाभावात् । न च तत्र प्रमाणांतरा वृत्तिरेवाभ्युपगंतुं युक्ता शब्दात्सामान्यतः प्रतिपन्नायामपि तस्या विशेषसंशयात् प्रमाणांतरवृत्तेरेव निश्चयात् । ततो वक्तुरिच्छायां बहिरर्थवच्छब्दस्य प्रवृत्त्यसंभवेपि तामेव शब्दो विदधातीति कथं न वांध्यविजृंभितं, सर्वशब्दानामन्यापोहकारित्वप्रतिज्ञानात् । ननु च विवक्षायाः स्वरूपे संवेद्यमाने शब्दो न प्रवर्तते एव कल्पितेन्यापोहे तस्य प्रवृत्तेस्ततोन्यापोहकारी सर्वः शब्द इति वचनान्न वांध्यविलसितमिति चेत्, स

तर्हि कल्पितोन्यापोहः विवक्षातो भिन्नस्वभावो वक्तुः स्वसंवेद्यो न स्याद्भावांतरवत् तस्य तत्स्वभावत्वे वा सवेद्यत्वसिद्धेः कथं न सवेद्यमाने तत्स्वरूपे शब्दः प्रवर्तते । ननु च वक्तुर्विवक्षाया स्वसंविदितं रूप संवेदनमात्रोपादान सकलप्रत्यये भावात् कल्पनाकारस्तु पूर्वशब्दवासनोपादानस्तत्र वर्तमानः शब्दः कथं स्वसवेद्ये रूपे वास्तवे प्रवर्तते नाम यतो वस्तुविषयः स्यादिति चेत्, नैवं । स्वसविदितरूपकल्पनाकारयोर्भिन्नोपादानत्वेन सतानभेदप्रसगात् । तथा च सर्वचित्तचैत्तानामात्मसवेदन प्रत्यक्षमिति व्याहन्यतो स्वसंवेदनाद्भिन्नस्य विकल्पस्य स्वसविदितत्वविरोधात् रूपादिवत स्वसवेदनस्यैवोपादानत्वात् । कल्पनोत्पत्तौ शब्दवासनायाः सहकारित्वान्न स्वसविदितस्वरूपात् कल्पनाकारो भिन्नसतान इति चेत, कथमिदानीं ततोसावनन्य एव न स्यादभिन्नोपादानत्वात् । तथापि तस्य ततोन्यत्वे कथमुपादानभेदो भेदकः ? कार्याणां व्यतिरेकासिद्धेः कार्यभेदस्योपादानभेदमंतरेणापि भावात् तस्य तत्साधनतानुपपत्तेः । स्वसविदिताकारस्य कल्पिताकारस्य चैकस्य विकल्पज्ञानस्य तथाविधानेकाकारविकल्पोपादानत्वाददोषोयमिति चेत्, नैकस्यानेकाकारस्य वस्तुन सिद्ध्यनुषंगात । सविदि कल्पिताकारस्य भ्रांतत्वान्नैकमनेकाकारं विकल्पवेदनमिति चेत न, भ्रांतेतराकारस्य तदवस्थत्वात । भ्रांताकारस्यासत्त्वे तदेकं सदसदात्मकमिति कुतो न सत्त्वसिद्धि । यदि पुनरसदाकारस्याकिंचिद्रूपत्वादेकरूपमेव विकल्पवेदनमिति मति, तदा तत्र शब्दः प्रवर्तेत इति न क्वचित्प्रवर्तेत इत्युक्त स्यात । तथोपगमे च विवक्षाजन्मानो हि शब्दास्तामेव गमयेयुरिति रिक्ता वाचोयुक्ति । गमयेयुरिति संभावनायां लिङ्प्रयोगात्तामपि माजीगमन्न गीर्बहिरर्थवत्सर्वथा निर्विषयत्वेन तेषा व्यवस्थापनादित्यप्यात्मघातिनो वचनं स्वयं साधनदूषणवचनानर्थक्यप्रसक्तेः । संवृत्या तद्वचनमर्थवदिति चेत केनार्थेनेति वक्तव्यं ? तदन्यापोहमात्रेणेति चेत, विचारोपपन्नेनेतरेण वा ? न तावत्प्रथमपक्षस्तस्य विचार्यमाणस्याकिंचिद्रूपत्वसमर्थनात । विचारानुपपन्नेन त्वन्यापोहेन सांवृत्तेन वचनस्यार्थवत्त्वे बहिरर्थेन तथाभूतेन तस्यार्थवत्त्व किमनिष्टं तथा व्यवहर्तुर्वचनाद्बहिः प्रवृत्तेरपि घटनात् ॥

**अन्यापोहे प्रतीते च कथमर्थे प्रवर्तनम् । शब्दात्सिद्ध्येज्जनस्यास्य सर्वथातिप्रसंगतः ॥ ४५ ॥**

*न ह्यन्यत्र शब्देन चोद्यतेन्यत्र तन्मूला प्रवृत्तिर्युक्ता गोदोहचोदने बलीवर्दवाहनादौ तत्प्रसंगात् ॥*

**एकत्वारोपमात्रेण यदि दृश्यविकल्पयोः । प्रवृत्तिः कस्यचिद्दृश्ये विकल्पेप्यस्त्वभेदतः ॥४६॥**
**नैकत्वाध्यवसायोपि दृश्यं स्पृशति जातुचित् । विकल्प्यस्यान्यथा सिद्ध्येद दृश्यस्पर्शित्वमंजसा ४७**
**विकल्प्यदृश्यसामान्यैकत्वेनाध्यवसीयते । यदि दृश्यविशेषे स्यात् कथं वृत्तिस्तदर्थिनाम् ४८॥**
**तस्य चेद् दृश्यसामान्यैकत्वारोपात्क वर्तनम् । सौगतस्य भवेदर्थेनवस्थाप्यनुषंगतः ॥ ४९ ॥**

नान्यस्माद्व्यावृत्तिरन्यार्थस्य न च व्यावृत्तोन्य एवेत्युच्यते घटस्याघटव्यावृत्तेः निवर्तमानस्याघटत्वप्रसंगात् । तथा च न तस्या घटव्यावृत्तिर्नाम तस्माद्यैवान्या व्यावृत्तिः स एव व्यावृत्तः शब्दप्रतिपत्तिभेदस्तु संकेतभेदादेव व्यावृत्तिर्व्यावृत्त इति । धर्मधर्मिप्राधान्येन सकेतविशेषे प्रवृत्तेस्तद्वाच्यभेदस्तु न वास्तवोतिप्रसंगात् । तदुक्त । "अपि चान्योन्यव्यावृत्तिवृत्त्योर्व्यावृत्त इत्यपि । शब्दाश्च निश्चयाश्चैव संकेत न निरुंधते" इति दृश्यविकल्पयोर्व्यावृत्त्योरेकत्वारोपाव्यावृत्तिचोदनेपि शब्देन विकल्पेन वा व्यावृत्तेः प्रवृत्तिरर्थे स्यादिति कश्चित् । तस्य विकल्प्येपि कदाचित्प्रवृत्तिरस्तु विशेषाभावात । न हि दृश्यविकल्प्ययोरेकत्वाध्यवसायाविशेषेपि दृश्य एव प्रवृत्तिर्न तु विकल्पे जातुचिदिति बुध्यामहे । दृश्येर्थक्रियार्थिनां प्रवृत्तिस्तस्यार्थक्रियायां समर्थनान्न पुनर्विकल्प्ये तस्य तत्रासमर्थत्वादिति चेन्ना, अर्थक्रियासमर्थेन विकल्पेन सहैकत्वाध्यारोपमापन्नस्य दृश्यस्यार्थक्रियासमर्थत्वैकांताभावात् । स्वतोर्थक्रियासमर्थ

दृश्यमिति चेत् तदेकत्वाध्यारोपाद्विकल्प्यमपि स्वतो न तत्समर्थमिति चेत् तदैक्यारोपाद् दृश्यमपि तदनयोरेकत्वेनाध्यवसितयोरविशेषात् सर्वथा क्वचित्प्रवृत्तौ कथमन्यत्रापि प्रवृत्तिर्विनिवार्यते । न चानयोरेकत्वाध्यवसायः संभवति दृश्यस्याध्यवसायाविषयत्वात् अन्यथा विकल्पस्य वस्तुसंस्पर्शित्वप्रसंगात् । न च परमार्थतो दृश्यमविषयीकुर्वन् विकल्पो विकल्प्येन सहैकतयाध्यवस्यति नामातिप्रसंगात् । ननु च दृश्यं विकल्पस्यालंबनं मा भूदध्यवसेयं तु भवतीति युक्तं तद्विकल्प्येन सहैकतयाध्यवसायत्वमिति चेत्, तर्हि न विशेषरूपं तेनैक्येनाध्यवसीयते सामान्याकारस्यैवाध्यवसेयत्वात् । दृश्यसामान्येन सह विकल्प्यमेकत्वेनाध्यवसीयत इति चेत्, कथं दृश्यविशेषे तदर्थिना प्रवृत्तिः स्यात् । दृश्यविशेषस्य दृश्यसामान्येन सहैकत्वारोपात्तत्र प्रवृत्तिरिति चेत्, क्वेदानीं सौगतस्य प्रवृत्तिरनवस्थानात् । सुदूरमप्यनुसृत्य विशेषेऽध्यवसायासंभवात् । ततोऽर्थप्रवृत्तिमिच्छता शब्दात्तस्य नान्यापोहमात्रं विषयोऽभ्युपेयो जातिमात्रादिवत् । सर्वथा निर्विषयः शब्दोऽस्त्वित्यसंगतं, वृत्त्यापि तस्य निर्विषयत्वे साधनादिवचनव्यवहारविरोधात् ॥

किं पुनरेवं शब्दस्य विषय इत्याह;—

**जातिव्यक्त्यात्मकं वस्तु ततोऽस्तु ज्ञानगोचरः । प्रसिद्धं बहिरंतश्च शब्दव्यवहृतीक्षणात् ॥५०॥**

यद्यत्र व्यवहृतिमुपजनयति तत्तद्विषयं यथा प्रत्यक्षादि । जातिव्यक्त्यात्मके वस्तुनि व्यवहृतिमुपजनयत्तद्विषयं । तथा च शब्द इत्यत्र नासिद्धं साधनं बहिरंतश्च व्यवहृतेः सामान्यविशेषात्मनि वस्तुनि समीक्षणात् । तथा च यत्रैव शब्दात् प्रतिपत्तिस्तत्रैव प्रवृत्तिः तस्यैव प्राप्तिः प्रत्यक्षादेरिवेति सर्वं सुस्थं । सत्ताशब्दाद्द्रव्यत्वादिशब्दाद्वा कथं सामान्यविशेषात्मनि वस्तुनि प्रतिपत्तिरिति चेत्, सद्विशेषोपहितस्य सत्सामान्यस्य द्रव्यादिविशेषोपहितस्य च द्रव्यत्वादिसामान्यस्य तेन प्रतिपादनात् । तदनेनाभावशब्दादद्रव्यत्वादित्वाद्वा तत्र प्रतिपत्तिरुक्ता भावांतरस्वभावत्वादभावस्य, गुणादिस्वभावत्वाच्चाद्रव्यत्वादेः भावोपहितस्याभावस्याभावशब्देन गुणाद्युपहितस्य चाद्रव्यत्वादेरद्रव्यत्वादिशब्देन प्रकाशनाद्वा । न च भावोपहितत्वमभावस्यासिद्धं सर्वदा घटस्याभावः पटस्याभाव इत्यादि भावोपाधेरेवाभावस्य प्रतीतेः । स्वातंत्र्येण सकृदप्यवेदनात् । तथैवाद्रव्यं गुणादिरजीवो धर्मादिरिति गुणाद्युपाधेरद्रव्यत्वादेः सुप्रतीतत्वात् न तस्य तदुपहितत्वमसिद्धं तथा प्रतीतेरबाधत्वात् । एतेन सत्सामान्यस्य विशेषोपहितत्वं द्रव्यत्वादिसामान्यस्य च द्रव्यत्वादिविशेषोपहितत्वमसिद्धं ब्रुवाणः प्रत्याख्यातः, सतां विशेषाणां भावः सत्ता द्रव्यादीनां भावो द्रव्यादित्वमिति सत्तादिसामान्यस्य स्वविशेषाश्रयस्यैव प्रत्ययाभिधानव्यवहारगोचरत्वात् । सद्द्रव्यं सुवर्णं वानयेत्युक्ते तन्मात्रस्यानयनादर्शनात् स्वविशेषात्मन एव सदादिसामान्यस्य तद्गोचरत्वं प्रतीतिसिद्धं । सदादिविशेषमानयेति वचने तस्य सत्त्वादिसामान्यात्मकस्य व्यवहारगोचरत्ववत् । ततः सूक्तं सामान्यविशेषात्मनो वस्तुनः शब्दगोचरत्वं । तथा शब्दव्यवहारस्य निर्बाधमवभासनात् । कथमेवं पंचतयी शब्दानां वृत्तिर्जात्यादिशब्दानामभावादिति न शंकनीयं, यस्मात्;—

**तत्र स्याद्वादिनः प्राहुः कृत्वापोद्धारकल्पनाम् । जातेः प्रधानभावेन कांश्चिच्छब्दान् प्रबोधकान् ५१**

**व्यक्तेः प्रख्यापकांश्चान्यान् गुणद्रव्यक्रियात्मनः । लोकसंव्यवहारार्थमपरान् पारिभाषिकान् ५२**

न हि गौरश्व इत्यादिशब्दाज्जातेः प्रधानभावेन गुणीभूतव्यक्तिस्वभावायाः प्रकाशने गुणक्रियाद्रव्यशब्दाद्वा यथोदिताद्व्यक्तेर्गुणाद्यात्मिकायाः प्राधान्येन गुणीभूतजात्यात्मनः प्रतिपादने स्याद्वादिनां कश्चिद्विरोधो येन सामान्यविशेषात्मकवस्तुविषयशब्दमाचक्षाणानां पंचतयी शब्दप्रवृत्तिर्न सिद्ध्येत् ॥

**तेनेच्छामात्रतंत्रं यत्संज्ञाकर्म तदिष्यते । नामाचार्यैर्न जात्यादिनिमित्तापन्नविग्रहम् ॥ ५३ ॥**

सिद्धे हि जात्यादिनिमित्तांतरे विवक्षात्मनः शब्दस्य निमित्तात संव्यवहारिणा निमित्तांतरानपेक्षं संज्ञाकर्म नामेत्याहुराचार्यास्ततो जात्यादिनिमित्तं सज्ञाकरणमनादियोग्यतापेक्ष न नाम । केनचित् स्वेच्छया सव्यवहारार्थं प्रवर्तितत्वात्, परापरवृद्धप्रसिद्धेस्तथैवाव्यवच्छेदात्, बाधकाभावात् ॥

का पुनरियं स्थापनेत्याह;—

**वस्तुन. कृतसंज्ञस्य प्रतिष्ठा स्थापना मता । सद्भावेतरभेदेन द्विधा तत्त्वाधिरोपतः ॥ ५४ ॥**

स्थाप्यत इति स्थापना प्रतिकृति सा चाहितनामकस्येंद्रादेर्वास्तवस्य तत्त्वाध्यारोपात प्रतिष्ठा सोऽयमित्यभिसंबंधेनान्यस्य व्यवस्थापना स्थापनामात्रं स्थापनेति वचनात् । तत्राध्यारोप्यमानेन भावेंद्रादिना समाना प्रतिमा सद्भावस्थापना मुख्यदर्शिन· स्वयं तस्यास्तद्बुद्धिसंभवात् । कथंचित्सादृश्यसद्भावात् । मुख्याकारशून्या वस्तुमात्रा पुनरसद्भावस्थापना परोपदेशादेव तत्र सोऽयमिति सप्रत्ययात् ॥

**सादरानुग्रहाकांक्षाहेतुत्वात्प्रतिभिद्यते । नाम्नस्तस्य तथाभावाभावादत्राविवादतः ॥ ५५ ॥**

स्थापनायामेवादरोनुग्रहाकाक्षा च लोकस्य न पुनर्नाम्नीत्यत्र न हि कस्यचिद्विवादोस्ति येन तत· सा न प्रतिभिद्यते । नाम्नि कस्यचिदादरदर्शनान्न ततस्तद्भेद इति चेन्न, स्वदेवतायामतिभक्तितस्तन्नामकेर्थे तदध्यारोपस्याशुवृत्तेस्तस्थापनायामेवादरावतारात् । तदनेन नाम्नि कस्यचिदनुग्रहाकाक्षाशका व्युदस्ता, केवलमाहितनामके वस्तुनि कस्यचित्कादाचित्की स्थापना कस्यचित्तु कालांतरस्थायिनी नियता । भूयस्तथा सप्रत्ययहेतुरिति विशेष. ॥

**नन्वनाहितनाम्नोपि कस्यचिद्दर्शनेंजसा । पुनस्तत्सदृशे चित्रकर्मादौ दृश्यते स्वतः ॥ ५६ ॥**
**सोऽयमित्यवसायस्य प्रादुर्भावः कथंचन । स्थापना सा च तस्येति कृतसंज्ञस्य सा कुतः ॥५७॥**
**नैतत्सन्नाम सामान्यसद्भावात्तत्र तत्त्वतः । कान्यथा सोयमित्यादिव्यवहारः प्रवर्तताम् ॥५८॥**

नन्वेवं सति नाम्नि स्थापनानुपपत्तेस्तस्यास्तेन व्याप्तिः कथ न तादात्म्यमिति चेन्न, विरुद्धधर्माध्यासात् ॥ तथाहि—

**सिद्धं भावमपेक्ष्यैव स्थापनायाः प्रवृत्तितः । तदपेक्षां विना नाम भावाद्भिन्नं ततः स्थितम् ५९**

किं स्वरूपप्रकारं द्रव्यमित्याह;—

**यत्स्वतोभिमुखं वस्तु भविष्यत्पर्ययं प्रति । तद्द्रव्यं द्विविधं ज्ञेयमागमेतरभेदतः ॥ ६० ॥**

न ह्यवस्त्वेव द्रव्यमबाधितप्रतीतिसिद्ध वा, नाप्यनागतपरिणामविशेषं प्रति ग्रहीताभिमुख्य न भवति पूर्वापरस्वभावत्यागोपादानस्थानलक्षणत्वाद्वस्तुनः सर्वथा तद्विपरीतस्य प्रतीतिविरुद्धत्वात । तच्च द्विविधमागमनोआगमभेदात् प्रतिपत्तव्यम् ॥

**आत्मा तत्प्राभृतज्ञायी यो नामानुपयुक्तधीः । सोत्रागमः समाम्नातः स्याद्द्रव्यं लक्षणान्वयात् ६१**

अनुपयुक्तः प्राभृतज्ञायी आत्मागमः । कथ द्रव्यमिति नाशंकनीयं द्रव्यलक्षणान्वयात् । जीवादिप्राभृतज्ञस्यात्मनोनुपयुक्तस्योपयुक्तं तत्प्राभृतज्ञानाख्यमनागतपरिणामविशेषं प्रति गृहीताभिमुख्यस्वभावत्वसिद्धेः ॥

**नो आगमः पुनस्त्रेधा ज्ञशरीरादिभेदतः । त्रिकालगोचरं ज्ञातुः शरीरं तत्र च त्रिधा ॥६२॥**
**भावि नोआगमद्रव्यमेष्यत् पर्यायमेव तत् । तथा तद्व्यतिरिक्तं च कर्मनोकर्मभेदभृत् ॥६३॥**

**ज्ञानावृत्त्यादिभेदेन कर्मानेकविधं मतम् । नोकर्म च शरीरत्वपरिणामनिरुत्सुकम् ॥ ६४ ॥**
**पुद्गलद्रव्यमाहारप्रभृत्युपचयात्मकम् । विज्ञातव्यं प्रपंचेन यथागममबाधितम् ॥ ६५ ॥**

नन्वागतपरिणामविशेषं प्रति गृहीताभिमुख्यं द्रव्यमिति द्रव्यलक्षणमयुक्तं, गुणपर्ययवद्द्रव्यमिति तस्य सूत्रितत्वात्, तदागमविरोधादिति कश्चित् । सोपि सूत्रार्थानभिज्ञः । पर्ययवद्द्रव्यमिति हि सूत्रकारेण वदता त्रिकालगोचरानंतक्रमभाविपरिणामाश्रयं द्रव्यमुक्तं । तच्च यदानागतपरिणामविशेषं प्रत्यभिमुखं तदा वर्तमानपर्यायाक्रांतं परित्यक्तपूर्वपर्यायं च निश्चीयतेन्यथानागतपरिणामाभिमुख्यानुपपत्तेः खरविषाणादिवत् । केवलं द्रव्यार्थप्रधानत्वेन वचनेऽनागतपरिणामाभिमुखमतीतपरिणामं वानुपायि द्रव्यमिति निक्षेपप्रकरणे तथा द्रव्यलक्षणमुक्तं । सूत्रकारेण तु परमतव्यवच्छेदेन प्रमाणार्पणाद्गुणपर्ययवद्द्रव्यमिति सूत्रितं क्रमाक्रमानेकांतस्य तथा व्यवस्थितेः ॥

कुतस्तर्हि त्रिकालानुयायि द्रव्यं सिद्धमित्याह;—

**अन्वयप्रत्ययात्सिद्धं सर्वथा बाधवर्जितात् । तद्द्रव्यं बहिरंतश्च मुख्यं गौणं ततोऽपरम् ॥ ६६ ॥**

तदेवेदमित्येकत्वप्रत्यभिज्ञानमन्वयप्रत्ययः स तावज्जीवादिप्राभृतज्ञायिन्यात्मन्यनुपयुक्ते जीवाद्यागमद्रव्येस्ति । य एवाहं जीवादि प्राभृतज्ञाने स्वयमुपयुक्तः प्रागासन् स एवेदानीं तत्रानुपयुक्तो वर्ते पुनरुपयुक्तो भविष्यामीति सप्रत्ययात् । न चायं भ्रांतः सर्वथा बाधवर्जितत्वात् । न तावदस्मदादिप्रत्यक्षेण तस्य बाधस्तद्विषये स्वसंवेदनस्यापि विशदस्य वर्तमानपर्यायविषयस्याप्रवर्तनात् । नाप्यनुमानेन तस्य बाधस्तस्य तद्विपरीतविषयव्यवस्थापकस्यासंभवात् । यत्सत्तत्सर्वं क्षणिकमक्षणिके सर्वथार्थक्रियाविरोधात्तलक्षणसत्त्वानुपपत्तेरित्यनुमानेन तद्बाध इति चेन्नास्य विरुद्धत्वात् । सत्त्वं ह्यर्थक्रियया व्याप्तं, सा च क्रमयौगपद्याभ्यां ते च कथंचिदन्वयित्वेन, सर्वथानन्वयिन क्रमयौगपद्यविरोधादर्थक्रियाविरहात् सत्त्वानुपपत्तेरिति समर्थनात् । सादृश्यप्रत्यभिज्ञानमात्मन्येकत्वप्रत्ययं बाधत इति चेन्न, एकत्र संताने तस्य जातुचिदभावात् । नाना संतानचित्तेषु तद्दर्शनादेकसंतानचित्तेषु सद्भाव इति चेन्न, अनेकसंतानविभागाभावप्रसंगात् । सदृशत्वाविशेषेपि केषांचिदेव चित्तविशेषाणामेकसंतानत्वं प्रत्यासत्तिविशेषात् परेषां नानासंतानविभागसिद्धौ सिद्धमेकद्रव्यात्मकचित्तविशेषाणामेकसंतानत्वं द्रव्यप्रत्यासत्तेरेव तथा भावनिबंधनत्वोपपत्तेरुपादानोपादेयभावानंतर्यादेरपाकृतत्वात् । ततोऽस्खलत्सादृश्यप्रत्यभिज्ञानात् सादृश्यसिद्धिवदस्खलदेकत्वप्रत्यभिज्ञानादेकत्वसिद्धिरेवेति निरूपितप्रायं । एतेन जीवादिनोआगमद्रव्यसिद्धिरुक्ता । य एवाहं मनुष्यजीवः प्रागासन् स एवाधुना देवो वर्ते पुनर्मनुष्यो भविष्यामीत्यन्वयप्रत्ययस्य सर्वथाप्यबाध्यमानस्य सद्भावात् । यदेवं जलं शुक्तिविशेषे पतितं तदेव मुक्ताफलीभूतमित्याद्यन्वयप्रत्ययवत् । ननु च जीवादिनोआगमद्रव्यमसंभाव्यं जीवादित्वस्य सार्वकालिकत्वेनानागतत्वासिद्धेस्तदभिमुख्यस्य कस्यचिदभावादिति चेत् । सत्यमेतत् । तत एव जीवादिविशेषापेक्षयोदाहृतो जीवादिद्रव्यनिक्षेपो । नन्वेवमागमद्रव्य वा बाधितात्तदन्वयप्रत्ययान्मुख्यं सिध्यतु ज्ञायकशरीरं तु त्रिकालगोचरं तद्व्यतिरिक्तं च कर्मनोकर्मविकल्पमनेकविधं कथं तथा सिध्येत् प्रतीत्यभावादिति चेन्न, तत्रापि तथाविधान्वयप्रत्ययस्य सद्भावात् । यदेव मे शरीरं ज्ञातुमारभमाणस्य तत्त्वं तदेवेदानीं परिसमाप्ततत्त्वज्ञानस्य वर्तत इति वर्तमानज्ञायकशरीरे तावदन्वयप्रत्ययः । यदेवोपयुक्ततत्त्वज्ञानस्य मे शरीरमासीत्तदेवाधुनानुपयुक्ततत्त्वज्ञानस्येत्यतीतज्ञायकशरीरे प्रत्यवमर्शः । यदेवाधुनानुपयुक्ततत्त्वज्ञानस्य शरीरं तदेवोपयुक्ततत्त्वज्ञानस्य भविष्यतीत्यनागतज्ञायकशरीरे प्रत्ययः । तर्हि ज्ञायकशरीरं भाविनोआगमद्रव्यादनन्यदेवेति

चेन्न, ज्ञायकविशिष्टस्य ततोन्यत्वात् । तस्यागमद्रव्यादन्यत्वं सुप्रतीतमेवानात्मत्वात् । कर्म नोकर्म वान्वयप्रत्ययपरिच्छिन्नं ज्ञायकशरीरादनन्यदिति चेत् न, कार्मणस्य शरीरस्य तैजसस्य च शरीरस्य शरीरभावमापन्नस्याहारादिपुद्गलस्य वा ज्ञायकशरीरत्वासिद्धेः, औदारिकवैक्रियिकाहारकशरीरत्रयस्यैव ज्ञायकशरीरत्वोपपत्तेरन्यथा विग्रहगतावपि जीवस्योपयुक्तज्ञानत्वप्रसंगात् तैजसकार्मणशरीरयोः सद्भावात् । कर्म नोकर्म नोआगमद्रव्यं भाविनोआगमद्रव्यादनर्थांतरमिति चेन्न, जीवादिप्राभृतज्ञायिपुरुषकर्म नोकर्मभावमापन्नस्यैव तथाभिधानात् ततोन्यस्य भाविनोआगमद्रव्यत्वोपगमात् । तदेतदुक्तप्रकारं द्रव्यं यथोदितस्वरूपापेक्षया मुख्यमन्यथात्वेनाध्यारोपितं गौणमवबोद्धव्यम् ॥

**सांप्रतो वस्तुपर्यायो भावो द्वेधा स पूर्ववत् । आगमः प्राभृतज्ञायी पुमांस्तत्रोपयुक्तधीः ॥६७**
**नोआगमः पुनर्भावो वस्तु तत्पर्ययात्मकम् । द्रव्यादर्थांतरं भेदप्रत्ययाद् ध्वस्तबाधनात् ॥६८॥**

वस्तुन पर्यायस्वभावो भाव इति वचनात्तस्यावस्तुस्वभावता व्युदस्यते । सांप्रत इति वचनात्कालत्रयव्यापिनो द्रव्यस्य भावरूपता । नन्वेवमतीतस्यानागतस्य च पर्यायस्य भावरूपताविरोधाद्वर्तमानस्यापि सा न स्यात्तस्य पूर्वापेक्षयानागतत्वात् उत्तरापेक्षयातीतत्वादतो भावलक्षणस्याव्याप्तिरसंभवो वा स्यादिति चेन्न, अतीतस्यानागतस्य च पर्यायस्य स्वकालापेक्षया सांप्रतिकत्वाद्भावरूपतोपपत्तेरननुयायिनः परिणामस्य सांप्रतिकत्वोपगमादुक्तदोषाभावात् । स तु भावो द्वेधा द्रव्यवदागमनोआगमविकल्पात् । तत्प्राभृतविषयोपयोगाविष्ट आत्मा आगमः जीवादिपर्यायाविष्टोऽन्य इति वचनात् । कथं पुनरागमो जीवादिभाव इति चेत्, प्रत्ययजीवादिवस्तुनः सांप्रतिकपर्यायत्वात् । प्रत्ययात्मका हि जीवादयः प्रसिद्धा एवार्थाभिधानात्मकजीवादिवत् । तत्र जीवादिविषयोपयोगाख्येन तत्प्रत्ययेनाविष्टः पुमानेव तदागम इति न विरोधः, ततोन्यस्य जीवादिपर्यायाविष्टस्यार्थादेर्नोआगमभावजीवत्वेन व्यवस्थापनात् । न चैवंप्रकारो भावोऽसिद्धस्तस्य बाधरहितेन प्रत्ययेन साधितत्वात् प्रोक्तप्रकारद्रव्यवत् । नापि द्रव्यादनर्थांतरमेव तस्याबाधितभेदप्रत्ययविषयत्वात् अन्यथान्वयप्रत्ययविषयत्वानुषंगाद्द्रव्यवत् ॥

**नामोक्तं स्थापना द्रव्यं द्रव्यार्थिकनयार्पणात् । पर्यायार्थार्पणाद् भावस्तैर्न्यासः सम्यगीरितः ॥६९**

नन्वस्तु द्रव्यं शुद्धमशुद्धं च द्रव्यार्थिकनयादेशात् नामस्थापने तु कथं तयोः प्रवृत्तिमारभ्य प्रागुपरमादन्वयित्वादिति ब्रूमः । न च तदसिद्धं देवदत्त इत्यादि नाम्नः कचिद्बालाद्यवस्थाभेदाद्भिन्नेपि विच्छेदानुपपत्तेरन्वयित्वसिद्धेः । क्षेत्रपालादिस्थापनायाश्च कालभेदेपि तथात्वाविच्छेदे इत्यन्वयित्वमन्वयप्रत्ययविषयत्वात् । यदि पुनरनाद्यनंतान्वयासत्त्वान्नामस्थापनयोरनन्वयित्वं तदा घटादेरपि न स्यात् । तथा च कुतो द्रव्यत्वं ? व्यवहारनयात्तस्यावांतरद्रव्यत्वे तत एव नामस्थापनयोस्तदस्तु विशेषाभावात् । ततः सूक्तं नामस्थापनाद्रव्याणि द्रव्यार्थिकस्य निक्षेप इति । भावस्तु पर्यायार्थिकस्य सांप्रतिकविशेषमात्रत्वात्तस्य । तदेतैर्नामादिभिर्न्यासो न मिथ्या, सम्यगित्यधिकारात् । सम्यक्त्वं पुनरस्य सुनयैरधिगम्यमानत्वात् ॥

**तेषां दर्शनजीवादिपदार्थानामशेषतः । इति संप्रतिपत्तव्यं तच्छब्दग्रहणादिह ॥ ७० ॥**

यदसंस्त कश्चित् तद्ग्रहणं सूत्रेनर्थकं तेन विनापि नामादिभिर्न्यासः । सम्यग्दर्शनजीवादीनामित्यभिसंबंधसिद्धेस्तेषां प्रकृतत्वान्न जीवादीनामेव अनंतरत्वात्तदभिसंबंधप्रसक्तिस्तेषां विशेषादिष्टत्वात् प्रकृतदर्शनादीनामबाधकत्वात् तद्विषयत्वेनाप्रधानत्वाच्च । नापि सम्यग्दर्शनादीनामेव नामादिन्यासाभिसंबंधापत्तिः जीवादीनामपि प्रत्यासन्नत्वेन तदभिसंबंधघटनादिति । तदनेन निरस्तं । सम्यग्दर्शनादीनां प्रधा-

नानामप्रत्यासन्नाना जीवादीनां च प्रधानानां प्रत्यासन्नानां नामादिन्यासाभिसंबंधार्थत्वात् तद्ग्रहणस्य । तदभावे प्रत्यासत्तेः प्रधानं बलीय इति न्यायात् सम्यग्दर्शनादीनामेव तत्प्रसंगस्य निवारयितुमशक्तेः ॥

**नन्वनंतः पदार्थानां निक्षेपो वाच्य इत्यसन् । नामादिष्वेव तस्यांतर्भावात्संक्षेपरूपतः ॥७१॥**

संख्यात एव निक्षेपस्तत्प्ररूपकनयानां संख्यातत्वात्, संख्याता एव नयास्तच्छब्दानां संख्यातत्वात् । "यावंतो वचनपथास्तावतः सभवंति नयवादाः" इति वचनात् । ततो न निक्षेपोऽनंतविकल्पः प्रपंचतोपि प्रसंजनीय इति चेन्न, विकल्पापेक्षयार्थापेक्षया च निक्षेपस्यासंख्याततोपपत्तेरनंततोपपत्तेश्च तथाभिधानात । केवलमनंतभेदस्यापि निक्षेपस्य नामादिविजातीयस्याभावान्नामादिष्वंतर्भावात सक्षेपतश्चातुर्विध्यमाह ॥ नन्वेवम्—

**द्रव्यपर्यायतो वाच्यो न्यास इत्यप्यसंगतम् । अतिसंक्षेपतस्तस्यानिष्टेरत्रान्यथास्तु सः ॥७२॥**

न ह्यत्रातिसंक्षेपतो निक्षेपो विवक्षितो येन तद्द्विविध एव स्याद्द्रव्यतः पर्यायतश्चेति तथा विवक्षायां तु तस्य द्वैविध्ये न किंचिदनिष्टं । संक्षेपतस्तु चतुर्विधोसौ कथित इति सर्वमनवद्यम् ॥

**ननु न्यासः पदार्थानां यदि स्यान्न्यस्यमानता । तदा तेभ्यो न भिन्नः स्यादभेदाद्धर्मधर्मिणोः ७३**

**भेदे नामादितस्तस्य परो न्यासः प्रकल्प्यताम् । तथा च सत्यवस्थानं क्व स्यात्तस्येति केचन ७४**

न हि जीवादयः पदार्था नामादिभिर्न्यस्यते, न पुनस्तेभ्यो भिन्नो न्यास इत्यत्र विशेषहेतुरस्ति यतोऽनवस्था न स्यात् धर्मधर्मिणोर्भेदोपगमात् । तन्न्यासस्यापि तैर्न्यासांतरे तस्यापि तैर्न्यासांतरे तस्यापि तैर्न्यासांतरस्य दुर्निवारत्वादिति केचित ॥

**तदयुक्तमनेकांतवादिनामनुपद्रवात् । सर्वथैकांतवादस्य प्रोक्तनीत्या निवारणात् ॥ ७५ ॥**

**द्रव्यार्थिकनयात्तावदभेदे न्यासतद्वतोः । न्यासो न्यासवदर्थानामिति गौणी वचोगतिः ७६**

**पर्यायार्थनयाद्भेदे तयोर्मुख्यैव सा मता । न्यासस्यापि च नामादिन्यासेष्टेनानवस्थितिः ७७**

**भेदप्रभेदरूपेणानंतत्वात्सर्ववस्तुनः । सद्भिर्विचार्यमाणस्य प्रमाणान्नान्यथा गतिः ॥ ७८ ॥**

न्यस्यमानता पदार्थेभ्योऽनर्थांतरमेव चेत्येकांतवादिन एवोपद्रवंते न पुनरनेकांतवादिनस्तेषां द्रव्यार्थिकनयार्पणात्तदभेदस्य, पर्यायार्थार्पणाद्भेदस्येष्टत्वात् । तत्राभेदविवक्षायां पदार्थाना न्यास इति गौणी वाचोयुक्तिः पदार्थेभ्योऽनन्यस्यापि न्यासस्य भेदेनोपचरितस्य तथा कथनात् । न हि द्रव्यार्थिकस्य तद्भेदो मुख्योस्ति तस्याभेदप्रधानत्वात् । भेदविवक्षाया तु मुख्या सा पर्यायार्थिकस्य भेदप्रधानत्वात् । न च तत्रानवस्था, न्यासस्यापि नामादिभिर्न्यासोपगमात् । नामजीवादयः स्थापनाजीवादयो द्रव्यजीवादयो भावजीवादयश्चेति जीवादिभेदाना प्रत्येकं नामादिभेदेन व्यवहारस्य प्रवृत्तेः परापरतत्प्रभेदानामनंतत्वात् सर्वस्य वस्तुनोऽनंतात्मकत्वेनैव प्रमाणतो विचार्यमाणस्य व्यवस्थितत्वात् सर्वथैकांते प्रतीत्यभावात् ॥

**ननु नामादयः केन्ये न्यस्यमानार्थरूपतः । यैर्न्यासोस्तु पदार्थानामिति केप्यनुयुंजते ॥ ७९ ॥**

**तेभ्योपि भेदरूपेण कथंचिदवसायतः । नामादीनां पदार्थेभ्यः प्रायशो दत्तमुत्तरम् ॥ ८० ॥**

**नामेंद्रादिः पृथक्तावद्भावेंद्रादेः प्रतीयते । स्थापनेंद्रादिरप्येवं द्रव्येंद्रादिश्च तत्त्वतः ॥ ८१ ॥**

**तद्भेदश्च पदार्थेभ्यः कथंचिद्घटरूपवत् । स्थाप्यस्थापकभावादेरन्यथानुपपत्तितः ॥ ८२ ॥**

नामादयो विशेषा जीवाद्यर्थात् कथंचिद्भिन्ना निक्षिप्यमाणनिक्षेपकभावात् सामान्यविशेषभावात् प्रत्ययादिभेदाच्च । ततस्तेषामभेदे तदनुपपत्तेरिति । घटाद्रूपादीनामिव प्रतीतिसिद्धत्वान्नामादीनां न्यस्यमानार्थाद्भेदेन तस्य तैर्न्यासो युक्त एव । न हि नामेंद्रः स्थापनेंद्रो द्रव्येंद्रो वा भावेंद्रादभिन्न एव प्रती-

यते येन नामेंद्रादिविशेषाणां तद्वतो भेदो न स्यात् । नन्वेवं नामादीनां परस्परपरिहारेण स्थितत्वादेकत्रार्थेऽवस्थानं न स्यात् विरोधात् शीतोष्णस्पर्शवत्, सत्त्वासत्त्ववदिति चेन्न, असिद्धत्वाद्विरोधस्य नामादीनामेकत्र दर्शनाद् विरोधस्यादर्शनसाध्यत्वात् । परमैश्वर्यमनुभवत्कश्चिदात्मा हि भावेंद्रः साम्प्रतिकेंद्रत्वपर्यायाविष्टत्वात् । स एवानागतमिंद्रत्वपर्यायं प्रति गृहीताभिमुख्यत्वाद्द्रव्येंद्रः, स एवेंद्रांतरत्वेन व्यवस्थाप्यमानः स्थापनेंद्रः, स एवेंद्रांतरनाम्नाभिधीयमानो नामेंद्र इत्येकत्रात्मनि दृश्यमानानां कथमिह विरोधो नाम अतिप्रसंगात् । तत एव न नामादीनां संकरो व्यतिकरो वा स्वरूपेणैव प्रतीतेः । तदनेन नामादीनामेकत्राभावसाधने विरोधादिसाधनस्यासिद्धिरुक्ता । येनात्मना नाम तेनैव स्थापनादीनामेकत्र विरोध एवेति चेत् न, तथानभ्युपगमात् ॥

**एकत्रार्थे विरोधश्चेन्नामादीनां सहोच्यते । नैकत्वासिद्धितोर्थस्य बहिरंतश्च सर्वथा ॥ ८३ ॥**

न हि बहिरंतर्वा सर्वथैकस्वभावं भावमनुभवामो नानैकस्वभावस्य तस्य प्रतीतेर्बाधकाभावात् । न च तथाभूतेर्थे, येन स्वभावेन नामव्यवहारस्तेनैव स्थापनादिव्यवहरणं तस्य प्रतिनियतस्वभावनिबंधनतयानुभूतेरिति कथं विरोधः सिध्येत् । किं च । नामादिभ्यो विरोधोनन्यो न्यो वा स्यादुभयरूपो वा ?

प्रथमद्वितीयपक्षयोर्नासौ विरोधक इत्याह,—

**नामादेरविभिन्नश्चेद्विरोधो न विरोधकः । नामाद्यात्मवदन्यश्चेन्कः कस्यास्तु विरोधकः ॥८४॥**

न तावदात्मभूतो विरोधो नामादीनां विरोधकः स्यादात्मभूतत्वान्नामादिस्वात्मवत् विपर्ययो वा । नाप्यनात्मभूतोऽनात्मभूतत्वाद्विरोधकोर्थांतरवत् विपर्ययो वा ॥

**भिन्नाभिन्नो विरोधश्चेत्किं न नामादयस्तथा । कुतश्चित्तद्वतः संति कथंचिद्भिदभिद्भृतः ॥८५॥**

विरोधो विरोधिभ्यः कथंचिद्भिन्नोऽभिन्नश्चाविरुद्धो न पुनर्नामादयस्तद्वतोर्थादिति ब्रुवाणो न प्रेक्षावान्॥

**एकस्य भावतोऽक्षीणकारणस्य यदुद्भवे । क्षयो विरोधकस्तस्य सोर्थो यत्राभिधीयते ॥ ८६ ॥**

**तदा नामादयो न स्युः परस्परविरोधकाः । सकृत्संभविनोर्थेषु जीवादिषु विनिश्चिताः ॥८७**

न विरोधो नाम कश्चिदर्थो येन विरोधिभ्यो भिन्नः स्यात् केवलमक्षीणकारणस्य सतानेन प्रवर्तमानस्य शीतादेः क्षयो यस्योद्भवे पावकादेः स एव तस्य विरोधकः । क्षयः पुनः प्रध्वंसाभावलक्षणः कार्यांतरोत्पाद एवेत्यभिन्नो विरोधिभ्यो भिन्न इव कुतश्चिद्व्यवह्रियत इति यदुच्यते तदापि नामादयः क्वचिदेकत्र परस्परविरोधिनो न स्युः सकृत्संभवित्वेन विनिश्चितत्वात् । न हि द्रव्यस्य प्रबंधेन वर्तमानस्य नामस्थापनाभावानामन्यतमस्यापि तत्रोद्भवे क्षयोनुभूयते नाम्नो वा स्थापनाया भावस्य वा तथा वर्तमानस्य तदितरप्रवृत्तौ येन विरोधो गम्येत । तथानुभवाभावेपि तद्विरोधकल्पनायां न किंचित्केनचिदविरुद्धं सिध्येत् । न च कल्पित एव विरोधः सर्वत्र तस्य वस्तुधर्मत्वेनाध्यवसीयमानत्वात् सत्त्वादिवत् । सत्त्वादयोपि सत्त्वेनाध्यवसीयमानाः कल्पिता एवेत्ययुक्तं तत्त्वतोर्थस्यासत्त्वादिप्रसंगात् । सकलधर्मनैरात्म्योपगमाददोषोयमिति चेत् कथमेवं धर्मी तात्त्विकः । सोपि कल्पित एवेति चेत्, किं पुनरकल्पितं ? स्पष्टमवभासमानं स्वलक्षणमिति चेत् नैकत्रेंद्रौ द्वित्वस्य बाधितत्वप्रसंगात् । यदि पुनरबाधितस्पष्टसंवेदनवेद्यत्वात्स्वलक्षणं परमार्थसत् नैकत्रेंद्रौ द्वित्वादिबाधितत्वादिति मन्यसे तदा कथमबाधितविकल्पाध्यवसीयमानस्य धर्मस्य धर्मिणो वा परमार्थसत्त्वं निराकुरुषे । विकल्पाध्यवसितस्य सर्वस्याबाधितत्वासंभवान्न वस्तुसत्त्वमिति चेत्, कुतस्तस्य तदसंभवनिश्चयः । विवादापन्नो धर्मादिर्नाबाधितो विकल्पाध्यवसितत्वात् मनोराज्यादिवदित्यनुमानादिति चेत्, स तद्बाधितत्वाभावस्तस्यानुमानविकल्पेनाध्य-

वसितः परमार्थसन्नपरमार्थसन् वा ? प्रथमपक्षे तेनैव हेतोर्व्यभिचारः, पक्षांतरे तत्त्वतस्तस्याबाधितत्वं अबाधितत्वाभावस्याभावे तदबाधितत्वविधानात् । न चाविचारसिद्धयोर्धर्मिधर्मयोरबाधितत्वाभावः प्रमाण-सिद्धमबाधितत्वं विरुणद्धि संवृत्तिसिद्धेन परमार्थसिद्धस्य बाधनानिष्टेः । तदिष्टौ वा स्वेष्टसिद्धेरयोगात् । कथं विकल्पाध्यवसितस्याबाधितत्वं प्रमाणसिद्धमिति चेत्, दृष्टस्य कथं ? बाधकाभावादिति चेत् तत एवान्यस्यापि । न हि दृष्टस्यैव सर्वत्र सर्वदा सर्वस्य सर्वथा बाधकाभावो निश्चेतुं शक्यो न पुनरध्यव-सितस्येति ब्रुवाणः स्वस्थः प्रतीत्यपलापात् । ततो विरोधः क्वचित्तात्त्विक एवाबाधितप्रत्ययविषयत्वादिष्टो वस्तुस्वभाववदिति विरोधिभ्यां भिन्नसिद्धेः । स भिन्न एव सर्वथेत्ययुक्तमुक्तोत्तरत्वात् । ताभ्यां भिन्नस्य तस्य विरोधकत्वे सर्वः सर्वस्य विरोधकः स्यादिति । ननु चार्थांतरभूतोपि विरोधिनोर्विरोधको विरोधः तद्विशेषणत्वे सति विरोधप्रत्ययविषयत्वात्, यस्तु न तयोर्विरोधकः स न तथा यथापरोर्थः ततो न सर्वः सर्वस्य विरोधक इति चेन्न; तस्य तद्विशेषणत्वानुपपत्तेः । विरोधो हि भावः स च तुच्छस्वभावो यदि शीतोष्णद्रव्ययोर्विशेषण तदा सकृत्तयोरदर्शनापत्तिः । अथ शीतद्रव्यस्यैव विशेषणं तदा तदेव विरोधि स्यान्नोष्णद्रव्यं । तथा च न द्विष्ठोसौ एकत्रावस्थितेः । न चैकत्र विरोधः सर्वदा तत्प्रसंगात् । एतेनोष्णद्रव्यस्यैव विरोधो विशेषणं इत्यपि निरस्तं । यदि पुन. कर्मस्थक्रियापेक्षया विरुद्धमानत्वं विरोधः स शीतद्रव्यस्य विशेषणं, कर्तृस्थक्रियापेक्षया विरोधः स उष्णद्रव्यस्य । विरोधसामान्या-पेक्षया विरोधस्योभयविशेषणत्वोपपत्तेर्द्विष्ठत्वं तदा रूपादेरपि द्विष्ठत्वनियमापत्तिस्तत्सामान्यस्य द्विष्ठत्वात्, रूपादेर्गुणविशेषणात् तत्सामान्यस्य पदार्थांतरत्वात् न तदनेकस्थत्वे तस्यानेकस्थत्वमिति चेत् तर्हि कर्मकर्तृस्थाद्विरोधविशेषात् पदार्थांतरस्य । विरोधसामान्यस्य द्विष्ठत्वे कुतस्तद्विष्ठत्वं येन द्वयोर्विशेषणं विरोधः । एतेन गुणयोः कर्मणोर्द्रव्यगुणयोः गुणकर्मणोः द्रव्यकर्मणोर्वा विरोधो विशेषणं इत्यपास्तं, विरोधस्य गुणत्वे गुणादावसंभवाच्च । तस्याभावरूपत्वे कथ सामान्यविशेषभावो येनानेकविरोधिविशेषण-भूतविरोधविशेषमव्यापि विरोधसामान्यमुपेयते । यदि पुनः षट्पदार्थव्यतिरेकत्वात् पदार्थशेषो विरोधो-ऽनेकस्थः, स च विरोध्यविरोधकभावप्रत्ययविशेषसिद्धेः समाश्रीयते तदा तस्य कुतो द्रव्यविशेषणत्व ? न तावत्संयोगात् पुरुषे दंडवत्तस्याद्रव्यत्वेन सयोगानाश्रयत्वात्, नापि समवायाद्गवि विषाणवत्तस्य द्रव्यगुणकर्मसामान्यविशेषव्यतिरिक्तत्वेनासमवायित्वात् । न च संयोगसमवायाभ्यामसबंधस्य विरोधस्य क्वचिद्विशेषणता युक्ता, सर्वस्य सर्वविशेषणानुपगात् । समवायवत्समवायिषु संयोगसमवायासत्त्वेपि तस्य विशेषणतेति चेन्न, तस्यापि तथा साध्यत्वात् । न चाभाववद्भावेषु तस्य विशेषणता तस्यापि तथा सिद्ध्यभावात् । न ह्यसिद्धमसिद्धस्योदाहरणं, अतिप्रसंगात् । ननु च विरोधिनावेतौ समवायिनाविमौ नास्तीह घट इति विशिष्टप्रत्ययः कथं विशेषणविशेष्यभावमंतरेण स्यात् । दंडीति प्रत्ययवद्भवति चायम-बाधितवपुर्न च द्रव्यादिषट्पदार्थानामन्यतमनिमित्तोऽय तदनुरूपत्वात् प्रतीतेः, नाप्यनिमित्तः कदाचित्क-चिद्भावात् । ततोस्यापरेण हेतुना भवितव्यं सतो विशेषणविशेष्यभावः संबंधशेषः पदार्थशेषेष्वविनाभा-ववदिति समवायवदभाववद्वा विरोधस्य क्वचिद्विशेषणत्वसिद्धौ तस्यापि विशेषणविशेष्यभावस्य स्वाश्रय-विशेषाश्रयिणः कुतस्तद्विशेषणत्वं । परस्माद्विशेषणविशेष्यभावादितिचेत् तस्यापि स्वविशेष्यविशेषणत्वं । परस्मादित्यनवस्थादप्रतिपत्तिविशेष्यस्य विशेषणप्रतिपत्तिमंतरेण तदनिष्टेः, नागृहीतविशेषणा विशेष्ये बुद्धिरिति वचनात् । सुदूरमपि गत्वा विशेषणविशेष्यभावस्यापरविशेषणविशेष्यभावाभावेपि स्वाश्रयविशेष-णत्वोपगमे समवायादेरपि क्व विशेषणत्वं, तदभावेपि किं न स्यात् ? इति न विशेषणविशेष्यभाव-सिद्धिः । तदसिद्धौ च न किंचित्कस्यचिद्विशेषणमिति न विरोधो विरोधिविशेषणत्वेन सिध्यति ।

विरोधप्रत्ययविशेषत्वं तु केवलं विरोधमात्रं साधयेन्न पुनरनयोर्विरोध इति तत्प्रतिनियमं, ततो न विरोधिभ्योत्यतभिन्नो विरोधोभ्युपगंतव्यः । कथंचिद्विरोध्यात्मकत्वे तु विरोधस्य प्रतिनियमसिद्धिर्न कश्चिदुपालंभ इति सूक्तं विरोधवत्त्वाश्रयान्नामादीनां भिन्नाभिन्नत्वसाधनं । नामादिभिर्न्यासोऽर्थाना-मनर्थक इति चेन्न, तस्य प्रकृतव्याकरणार्थत्वादप्रकृताव्याकरणार्थत्वाच्च । भावस्तम्भप्रकरणे हि तस्यैव व्याकरणं नामस्तंभादीनामव्याकरणं च अप्रकृताना न नामादिनिक्षेपाभावेर्थस्य घटते, तत्संकरव्यतिक-राभ्यां व्यवहारप्रसंगात् । ननु भावस्तंभस्य मुख्यत्वाद्व्याकरणं न नामादीनां "गौणमुख्ययोर्मुख्ये संप्र-त्यय" इति वचनात् । नैतन्नियत, गोपालकमानय कटजकमानयेत्यादौ गौणे सप्रत्ययसिद्धेः । न हि तत्र यो गाः पालयति यो वा कटे जातो मुख्यस्तत्र सप्रत्ययोस्ति । किं तर्हि ? यस्यैतन्नाम कृत तत्रैव गौणे प्रतीतिः । कृत्रिमत्वाद्गौणे सप्रत्ययो न मुख्ये तस्याकृत्रिमत्वात् "कृत्रिमाकृत्रिमयोः कृत्रिमे सप्रत्यय" इति वचनात् । नैतदेकांतिकं पांसुलपादस्य तत्रैवोभयगतिदर्शनात् । स ह्यप्रकरणज्ञत्वादुभय प्रत्येति किमह यो गाः पालयति यो वा कटे जातस्तमानयामि किं वा यस्यैषा संज्ञा तं ? इति विकल्पनात् । प्रकरणज्ञस्य कृत्रिमे सप्रत्ययोस्तीति चेत् न, तस्याकृत्रिमेपि सप्रत्ययोपपत्तेस्तथा प्रकरणात् । ननु च जीवशब्दादिभ्यो भावजीवादिष्वेव सप्रत्ययस्तेषामर्थक्रियाकारित्वादितिचेत् न, नामादीनामपि स्वार्थक्रियाकारित्वसिद्धेः । भावार्थक्रियायास्तैरकरणादनर्थक्रियाकारित्वं तेषामिति चेत्, नामाद्यर्थक्रियायास्तर्हि भावेनाकरणात्त-स्यानर्थक्रियाकारित्वमस्तु । काचिदप्यर्थक्रिया न नामादयः कुर्वंतीत्ययुक्तं तेषामवस्तुत्वप्रसंगात् । न चैतदुपपन्नं भाववन्नामादीनामबाधितप्रतीत्या वस्तुत्वसिद्धेः । एतेन नामैव वास्तवं न स्थापनादित्रयमिति शब्दाद्वैतवादिमतं, स्थापनैव कल्पनात्मिका न नामादित्रयं वस्तु सर्वस्य कल्पितत्वादिति विभ्रमैकांतवा-दिमतं, द्रव्यमेव तत्त्वं न भावादित्रयमिति च द्रव्याद्वैतवादिदर्शनं प्रतिव्यूढं । तदन्यतमापाये सकलस-व्यवहारानुपपत्तेश्च युक्तः सर्वपदार्थानां नामादिभिर्न्यासस्तावता प्रकरणपरिसमाप्तेः ॥

ननु नामादिभिर्न्यस्तानामखिलपदार्थानामधिगमः केन कर्तव्यो यतस्तद्व्यवस्था अधिगमजसम्यग्दर्शनव्य-वस्था च स्यात् । न चास्तुधना कस्यचिद्व्यवस्था सर्वस्य स्वेष्टतत्त्वव्यवस्थानुपगादिति वदंतं प्रत्याह सूत्रकार,—

## प्रमाणनयैरधिगमः ॥ ६ ॥

सर्वार्थानां मुमुक्षुभिः कर्तव्यो न पुनरसाधन एवाधिगम इति वाक्यार्थः ॥ कथमसौ तैः कर्तव्य इत्याह;—

**सूत्रे नामादिनिक्षिप्ततत्त्वार्थाधिगमस्थितः । कार्त्स्न्यतो देशतो वापि स प्रमाणनयैरिह ॥ १ ॥**

तन्निसर्गादधिगमाद्वेत्यत्र सूत्रे नामादिनिक्षिप्तानां तत्त्वार्थानां योधिगमः सम्यग्दर्शनहेतुत्वेन स्थितः स इह शास्त्रे प्रस्तावे वा कार्त्स्न्यतः प्रमाणेन कर्तव्यो देशतो नयैरेवेति व्यवस्था । नन्वेवं प्रमाणनयानामधि-गमस्तथान्यैः प्रमाणनयैः कार्यस्तदधिगमोप्यपरैरित्यनवस्था, स्वतस्तेषामधिगमे सर्वार्थानां स्वतः सोस्त्विति न तेषामधिगमसाधनत्वं । न वानधिगता एव प्रमाणनयाः पदार्थाधिगमोपाया ज्ञापकत्वादतिप्रसंगाच्चेत्य-परः । सोप्यप्रस्तुतवादी । प्रमाणनयानामभ्यासानभ्यासावस्थयोः स्वतः परतश्चाधिगमस्य वक्ष्यमाणत्वात् । परतस्तेषामधिगमे क्वचिदभ्यासात्स्वतोधिगमसिद्धेरनवस्थापरिहरणात् । स्वतोधिगमे सर्वार्थानामधिगमस्य तेषामचेतनत्वेनातिप्रसंगात् । चेतनार्थानां कथंचित्प्रमाणनयात्मकत्वेन स्वतोधिगमस्येष्टत्वाच्च श्रेयान् प्रमाणनयैरधिगमोर्थानां सर्वथा दोषाभावात् ॥

ननु च प्रमाणं नयाश्चेति द्वंद्ववृत्तौ नयस्य पूर्वनिपातः स्यादल्पाच्तरत्वान्न प्रमाणस्य बह्वच्तरत्वादित्याक्षेपे प्राह;—

**प्रमाणं च नयाश्चेति द्वंद्वे पूर्वनिपातनम्। कृतं प्रमाणशब्दस्याभ्यर्हितत्वेन बह्वचः ॥ २ ॥**

न ह्यल्पाच्तरादभ्यर्हितं पूर्वं निपततीति कस्यचिदप्रसिद्धं लक्षणहेत्वोरित्यत्र हेतुशब्दादल्पाच्तरादपि लक्षणपदस्य बह्वचोऽभ्यर्हितस्य पूर्वप्रयोगदर्शनात ॥

कथं पुनः प्रमाणमभ्यर्हितं नयादित्याह;—

**प्रमाणं सकलादेशि नयादभ्यर्हितं मतम्। विकलादेशिनस्तस्य वाचकोपि तथोच्यते ॥ ३ ॥**

कथमभ्यर्हितत्वानभ्यर्हितत्वाभ्यां सकलादेशित्वविकलादेशित्वे व्याप्तिसिद्धे यतः प्रमाणनययोस्ते सिद्ध्यत इति चेत, प्रकृष्टाप्रकृष्टविशुद्धिलक्षणत्वादभ्यर्हितत्वानभ्यर्हितत्वयोस्तद्व्यापकत्वमिति ब्रूम । न हि प्रकृष्टा विशुद्धिमंतरेण प्रमाणमनेकधर्मधर्मिस्वभावं सकलमर्थमादिशति. नयस्यापि सकलादेशित्वप्रसगात्। नापि विशुद्ध्यपकर्षमंतरेण नयो धर्ममात्रं वा विकलमादिशति प्रमाणस्याविकलादेशित्वप्रसगात् ॥

**स्वार्थनिश्चायकत्वेन प्रमाणं नय इत्यसत्। स्वार्थैकदेशनिर्णीतिलक्षणो हि नयः स्मृतः ॥ ४ ॥**

नयः प्रमाणमेव स्वार्थव्यवसायकत्वादिष्टप्रमाणवद् विपर्ययो वा, ततो न प्रमाणनययोर्भेदोस्ति येनाभ्यर्हितेतरता चिंत्या इति कश्चित्। तदसत्। नयस्य स्वार्थैकदेशलक्षणत्वेन स्वार्थनिश्चायकत्वासिद्धे । स्वार्थांशस्यापि वस्तुत्वे तत्परिच्छेदे छेदलक्षणत्वात्प्रमाणस्य स न चेद्वस्तु तद्विषयो मिथ्याज्ञानमेव स्यात्तस्यावस्तुविषयत्वलक्षणत्वादिति चोद्यमसदेव। कुत ?

**नायं वस्तु न चावस्तु वस्त्वंशः कथ्यते यतः। नासमुद्रः समुद्रो वा समुद्रांशो यथोच्यते॥५॥**
**तन्मात्रस्य समुद्रत्वे शेषांशस्यासमुद्रता। समुद्रबहुत्वं वा स्यात्तच्चेत्क्वास्तु समुद्रवित् ॥ ६ ॥**

यथैव हि समुद्रांशस्य समुद्रत्वे शेषसमुद्रांशानामसमुद्रत्वप्रसगात् समुद्रबहुत्वापत्तिर्वा तेपामपि प्रत्येक समुद्रत्वात्। तस्यासमुद्रत्वे वा शेषसमुद्रांशानामप्यसमुद्रत्वात् क्वचिदपि समुद्रव्यवहारायोगात् समुद्रांशः स एवोच्यते। तथा स्वार्थैकदेशो नयस्य न वस्तु स्वार्थैकदेशांतराणामवस्तुत्वप्रसगात्, वस्तुबहुत्वानुषक्तेर्वा। नाप्यवस्तु शेषांशानामप्यवस्तुत्वेन क्वचिदपि वस्तुव्यवस्थानुपपत्तेः । किं तर्हि ? । वस्त्वंश एवासौ तादृक्प्रतीतेर्बाधकाभावात् ॥

**नांशेभ्योर्थांतरं कश्चित्तत्त्वतोंशीत्ययुक्तिकम्। तस्यैकस्य स्थविष्ठस्य स्फुटं दृष्टेस्तदंशवत् ॥ ७ ॥**

नांतर्बहिर्वांशेभ्यो भिन्नोंशी कश्चित्तत्त्वतोस्ति यो हि प्रत्यक्षबुद्धावात्मान न समर्पयति प्रत्यक्षतां च स्वीकरोति। सोयममूल्यदानक्रयीत्ययुक्तिकमेव, स्थविष्ठस्यैकस्य स्फुटं साक्षात्करणात् तद्व्यतिरेकेणांशानामेवाप्रतिभासनात्। तथा इमे परमाणवो नात्मनः प्रत्यक्षबुद्धौ स्वरूपं समर्पयति प्रत्यक्षता च स्वीकर्तुमुत्सहंत इत्यमूल्यदानक्रयिण· ॥

**कल्पनारोपितोंशी चेत् स न स्यात् कल्पनांतरे। तस्य नार्थक्रियाशक्तिर्न स्पष्टज्ञानवेद्यता ॥८॥**

शक्यंते हि कल्पनाः प्रतिसंख्यानेन निवारयितु नेंद्रियबुद्धय इति स्वयमभ्युपेत्य कल्पनांतरे सत्यप्यनिवर्तमानं स्थवीयान्स एकमवयविन कल्पनारोपित ब्रुवन् कथमवयवेवयविवचनः ? यदि पुनरवयविकल्पनायाः कल्पनांतरस्य वागुवृत्तेर्विच्छेदानुपलक्षणात् सहभावाभिमानो लोकस्य। ततो न कल्पनांतरे सति कल्पनात्मनोप्यवयविनोस्तित्वमिति मतिः तदा कथमिंद्रियबुद्धीनां क्वचित्सहभावस्तात्त्विकः सिद्ध्येत्।

तासामप्याशुवृत्तेर्विच्छेदानुपलक्षणात्सहभावाभिमानसिद्धेः । कथं वाश्व विकल्पयतोपि च गोदर्शनाद्दर्शनक-ल्पनाविरहसिद्धिः ? कल्पनात्मनोपि गोदर्शनस्य तथाश्वविकल्पेन सहभावप्रतीतेरविरोधात । ततः सर्वत्र कल्पनायाः कल्पनान्तरोदये निवृत्तिरेष्टव्या. अन्यथेष्टव्याघातात् । तथा च न कल्पनारोपितोंशी कल्पनान्तरे सत्यप्यनिवर्तमानत्वात् स्वसंवेदनवत् । तस्यार्थक्रियाया सामर्थ्याच्च न कल्पनारोपितत्वं । न हि माणवकेऽ-ग्निरध्यारोपितः पाकादावाधीयते । करांगुलिष्वारोपितो वर्तनेयो निर्विषीकरणादावाधीयत इति चेन्न, मुद्रोल्लंघनाद्यर्थक्रियायामपि तस्याधानप्रसंगात । निर्विषीकरणादयस्तु तत्र पानादिमात्रनिबंधना एवेति न ततो विरुध्यते । नन्वर्थक्रियाशक्तिरसिद्धावयविनः परमाणूनामेवार्थक्रियासमर्थसिद्धेस्त एव ह्यसाधारणा-र्थक्रियाकारिणो रूपादितया व्यवह्रियन्ते । जलाहरणादिलक्षणसाधारणार्थक्रियाया प्रवर्तमानास्तु घटादि-तया । ततो घटाद्यवयविनो अवस्तुत्वसिद्धिस्तस्य संवृतसत्त्वादितिचेन्न, परमाणूनां जलाहरणाद्यर्थक्रियाया सामर्थ्यानुपपत्तेर्घटादेरेव तत्र सामर्थ्यात् परमार्थसिद्धेः । परमाणवो हि तत्र प्रवर्तमानाः कंचिदतिशयम-पेक्षन्ते नवा ? न तावदुत्तरः पक्षः सर्वदा सर्वेषां तत्र प्रवृत्तिप्रसंगात् । स्वकारणकृतमतिशयमपेक्षंत एवेति चेत् , कः पुनरतिशयः ? समानदेशतयोत्पाद इति चेत् , का पुनस्तेषां समानदेशता ? भिन्नदेशानामेवो-पगतत्वात् जलाहरणाद्यर्थक्रियायोग्यदेशता तेषां समानदेशता नान्या. यादृशि हि देशे स्थितः परमाणुरे-कस्तत्रोपयुज्यते तादृशि परेपि परमाणवः स्थितास्तत्रैवोपयुज्यमानाः समानदेशाः कथ्यन्ते न पुनरेकत्र देशे वर्तमाना, विरोधात । सर्वेषामेकपरमाणुमात्रत्वप्रसंगात सर्वात्मना परस्परानुप्रवेशादन्यथैकदेशत्वायोगादिति चेत । का पुनरियमेका जलाहरणाद्यर्थक्रिया? यस्यामुपयुज्यमाना भिन्नदेशवृत्तयोप्यणवः समानदेशाः स्युः । प्रतिपरमाणुभिद्यमाना हि सानेकैव युक्ता भवतामन्यथानेकघटादिपरमाणुसाध्यापि सैका स्यादविशेषात । सत्यं । अनेकैव सा जलाहरणाद्याकारपरमाणूनामेव तत क्रियात्वेन व्यवहरणात । तद्व्यतिरेकेण क्रि-याया विरोधात् केवलमेककार्यकरणादेकत्वेनोपचर्यत इति चेन्न, तत्कार्याणामप्येकत्वासिद्धेस्तत्रतोनेकत्वे-नोपगतत्वात स्वकार्यैककार्यकरणात् तत्कार्याणामेकत्वोपगमे स्यादनवस्था तत्त्वत सुदूरमपि गत्वा बहूना-मेकस्य कार्यस्यानभ्युपगमात । तदुपगमे वा नानाणूनामेकोवयवी कार्यं किं न भवेत् । यदि पुनरेकतया प्रतीयमानत्वादेकैव जलाहरणाद्यर्थक्रियोपेयते तदा घटाद्यवयवी तत एवैकः किं न स्यात ? सवृत्त्यास्तु तदेकत्वप्रत्ययस्य सांवृतत्वादिति चेत , जलाहरणाद्यर्थक्रियापि संवृत्त्यैकास्तु तदविशेषात । तथोपगमे कथं तत्त्वतो भिन्नदेशानामणूनामेकस्यामर्थक्रियाया प्रवृत्तेः समानदेशता यथोत्पादेतिशयस्तैस्तत्रापेक्ष्यते । तदन-पेक्षाश्च कथं साधारणाद्यर्थक्रियाहेतवोतिप्रसंगादिति न घटादिव्यवहारभाजः स्युः । न चायं घटाद्येकत्वप्र-त्ययः सांवृतः स्पष्टत्वादक्षजत्वाद्बाधकाभावाच्च यतस्तदेकत्वं पारमार्थिकं न स्यात् । ततो युक्तांशिनोर्थक्रि-यायां शक्तिरंशवदिति नासिद्धं साधनं स्पष्टज्ञानवेद्यत्वाच्च नांशी कल्पनारोपितोंशवत । नन्वंशा एव स्पष्ट-ज्ञानवेद्या नांशी तस्य प्रत्यक्षेऽप्रतिभासनादिति चेन्न, अक्षव्यापारे सत्ययं घटादिरिति सप्रत्ययात । अ-सति तदभावात् । नन्वक्षव्यापारेंशा एव परमसूक्ष्माः संचिताः प्रतिभासन्ते त एव स्पष्टज्ञानवेद्याः केवल-प्रतिभासानंतरमाश्वेवांशिविकल्पः प्रादुर्भवन्नक्षव्यापारभावीति लोकस्य विभ्रमः, सविकल्पाविकल्पयोर्ज्ञान-योरेकत्वाध्यवसायाद्युगपद्वृत्तेर्लघुवृत्तेर्वा । यदांशदर्शनं स्पष्टं तदैव पूर्वांशदर्शनजनितांशिविकल्पस्याभावात् । तदुक्तं । "मनसोर्युगपद्वृत्तेस्सविकल्पाविकल्पयोः । विमूढो लघुवृत्तेर्वा तयोरैक्यं व्यवस्यति" इति । तद-प्ययुक्तं । विकल्पेनास्पष्टेन सहैकत्वाध्यवसाये निर्विकल्पस्यांशदर्शनस्यास्पष्टत्वप्रतिभासनानुषंगात् । स्पष्ट-प्रतिभासेन दर्शनेनाभिभूतत्वाद्विकल्पस्य स्पष्टप्रतिभासनमेवेति चेन्न. अश्वविकल्पगोदर्शनयोर्युगपद्वृत्तौ तत एवाश्वविकल्पस्य स्पष्टप्रतिभासप्रसंगात् । तस्य भिन्नविषयत्वान्न गोदर्शनेनाभिभवोस्तीतिचेत् , किमिदानीं-

मेकविषयत्वे सति विकल्पस्य दर्शनेनाभिभवः साध्यते ततस्तस्य स्पष्टप्रतिभास इति मतं । नैतदपि साधीयः । शब्दस्वलक्षणदर्शनेन तत्क्षणक्षयानुमानविकल्पस्याभिभवप्रसगात् । नहि तस्य तेन युगपद्भावो नास्ति विरोधाभावात् ततोस्य स्पष्टप्रतिभासः स्यात् । भिन्नसामग्रीजन्यत्वादनुमानविकल्पस्य न दर्शनेनाभिभव इति चेत् , स्यादेवं । यद्यभिन्नसामग्रीजन्ययोर्विकल्पदर्शनयोरभिभाव्याभिभावकभावः सिद्ध्येत् नियमात् । न चासौ सिद्धः सकलविकल्पस्य स्वसंवेदनेन स्पष्टावभासिना प्रत्यक्षेणाभिन्नसामग्रीजन्येनाप्यभिभवाभावात् । स्वविकल्पवासनाजन्यत्वाद्विकल्पस्य पूर्वसंवेदनमात्रजन्यत्वाच्च स्वसवेदनस्य । तयोर्भिन्नसामग्रीजन्यत्वमेवेति चेत् । कथमेवमंशदर्शनेनांशिविकल्पस्याभिभवो नाम तथा दृष्टत्वादिति चेन्न, अंशदर्शनेनांशिविकल्पोऽभिभूत इति कस्यचित्प्रतीत्यभावात् । ननु चापि विकल्पः स्पष्टाभोऽनुभूयते नचासौ युक्तस्तस्यास्पष्टावभासित्वेन व्याप्तत्वात् । तदुक्तं । "न विकल्पानुविद्धस्य स्पष्टार्थप्रतिभासता" इति । ततोस्य दर्शनाभिभवादेव स्पष्टप्रतिभासोऽन्यथा तदसमवादिति चेन्न, विकल्पस्यास्पष्टावभासित्वेन व्याप्त्यसिद्धेः । कामाद्युपप्लुतचेतसा कामिन्यादिविकल्पस्य स्पष्टत्वप्रतीतेः सोक्षज एव प्रतिभासो न विकल्पज इत्ययुक्तं, निमीलिताक्षस्याधकारावृतनयनस्य च तदभावप्रसगात् । भावनातिशयजनितत्वात्तस्य योगिप्रत्यक्षत्वेत्यसंभाव्यं, भ्रांतत्वात् । ततो विकल्पस्यैवाक्षजस्य मानसस्य वा कस्यचित्स्पष्टमतिज्ञानावरणक्षयोपशमापेक्षस्याभ्रांतस्य भ्रांतस्य वा निर्बाधप्रतीतिसिद्धत्वादवयविविकल्पस्य स्वतः स्पष्टतोपपत्तेः सिद्धमशिनः स्पष्टज्ञानवेद्यत्वमशवत् । तच्च न कल्पनारोपितत्वे संभवतीति तस्यानारोपितत्वसिद्धेः । ननु स्पष्टज्ञानवेद्यत्व नावयविनो अनारोपितत्व साधयति कामिन्यादिना स्पष्टभावनातिशयजनिततद्विकल्पवेद्येन व्यभिचारादिति चेन्न, स्पष्टसत्यज्ञानवेद्यत्वस्य हेतुत्वात् । तथा स्वसंवेद्येन सुखादिनानैकात इत्यपि न मंतव्यं, कल्पनानारोपितत्वस्याक्षजत्वस्य साध्यतयानभ्युपगमात् । परमार्थसत्त्वस्यैव माध्यत्वात् । ननु परमार्थसतोवयविनः स्पष्टज्ञानेन वेदनं सर्वावयववेदनपूर्वकं कतिपयावयववेदनपूर्वकं वावयवावेदनपुरःसरं वा ? न तावदाद्यः पक्षः सर्वदा तदभावप्रसगात् , किंचिज्ज्ञस्य सर्वावयववेदनासभवात् । तदवयवानामपि स्थवीयसामवयवित्वेन सकलावयववेदनपुरःसरत्वे तस्य परमाणूनामवयवानामवेदनेन तदारब्धशताणुकादीनां वेदनानुषगादभिमतपर्वतादेरपि वेदनानुपपत्तेः । एतेन द्वितीयपक्षोपाकृत., कतिपयपरमाणुवेदने तदवेदनानुपपत्तेरविशेषात् । तृतीयपक्षे तु सकलावयवशून्ये देशेवयविवेदनप्रसगस्ततो नावयविनः स्पष्टज्ञानेन वित्तिः । यतः स्पष्टज्ञानवेद्यत्वं तत्त्वतः सिद्ध्येत् । इत्यपि प्रतीतिविरुद्धं, सर्वस्य हि स्थवीयानर्थः स्फुटतरमवभासत इति प्रतीतिः ॥

**भ्रांतिरिंद्रियजेयं चेत्स्थविष्टाकारदर्शिनी । काभ्रांतमिंद्रियज्ञानं प्रत्यक्षमिति सिद्ध्यतु ॥ ९ ॥**
**प्रत्यासन्नेष्वयुक्तेषु परमाणुषु चेन्न ते । कदाचित्कस्यचिद्बुद्धिगोचराः परमात्मवत् ॥ १० ॥**

सर्वदा सर्वथा सर्वस्येंद्रियबुध्यगोचरान् परमाणूनसंस्पृष्टान् स्वयमुपयंस्तत्रेंद्रियजं प्रत्यक्षमभ्रांतं कथं ब्रूयात्, यतस्तस्य स्थविष्टाकारदर्शनं भ्रांतं सिद्ध्येत् । कयाचित् प्रत्यासत्त्या तानिंद्रियबुद्धिविषयानिच्छत् कथमवयविवेदनमपाकुर्वीत सर्वस्यावयव्यारंभकपरमाणूनां कार्त्स्न्यतोऽन्यथा वा वेदनसिद्धेस्तद्वेदनपूर्वकावयविवेदनोपपत्तेः सहावयवावयविवेदनोपपत्तेर्वा नियमाभावात् । यदि पुनर्न परमाणवः कथंचित्कस्यचिदिंद्रियबुद्धेर्गोचरा नाप्यवयवी । न च तत्रेंद्रियजं प्रत्यक्षमभ्रातं सर्वमालंबते, भ्रांतमितिवचनात् । सर्वज्ञानानामनालंबनत्वादिति मतिस्तदा प्रत्यक्षं कल्पनापोढमभ्रांतमिति वचोऽनर्थकमेव स्यात् कस्यचित्प्रत्यक्षस्याभावात् ॥

**स्वसंवेदनमेवैकं प्रत्यक्षं यदि तत्त्वतः । सिद्धिरंशांशिरूपस्य चेतनस्य ततो न किम् ॥ ११ ॥**

यथेंद्रियजस्य बहिःप्रत्यक्षस्य तत्त्वतोऽसद्भावस्तथा मानसस्य योगिज्ञानस्य च स्वरूपमात्रपर्यवसितत्वात्

ततः स्वसंवेदनमेकं प्रत्यक्षमिति चेत् सिद्धं तर्हि चेतनातत्त्वमंशांशिस्वरूपं स्वसंवेदनात्तस्यैव प्रतीयमानत्वात् । न हि सुखनीलाद्याभासांशा एव प्रतीयन्ते स्वशरीरव्यापिनः सुखादिसंवेदनस्य महतोऽनुभवात् नीलाद्याभासस्य चेन्द्रनीलादेः प्रचयात्मनः प्रतिभासनात् ॥

**विज्ञानप्रचयोप्येष भ्रांतश्चेत् किमविभ्रमम् । स्वसंवेदनमध्यक्षं ज्ञानाणोरप्रवेदनात् ॥ १२ ॥**

न हि स्वसंविदि प्रतिभासमानस्य विज्ञानप्रचयस्य भ्रांततायां किंचित्स्वसंवेदनमभ्रांतं नाम यत्तदेव प्रत्यक्षं सिध्येत् । विज्ञानपरमाणोः संवेदनं तदितिचेत् न, तस्य सर्वदाप्यप्रवेदनात् । सर्वस्य ग्राह्यग्राहकात्मनः संवेदनस्य सिद्धेः । स्यान्मतं । न बुद्ध्या कश्चिदनुभाव्यो भिन्नकालोऽस्ति सुप्रसिद्धभिन्नकालाननुभाव्यवत् । तस्य हेतुत्वेनाप्यनुभाव्यत्वसाधने नयनादिनानेकांतात् । स्वाकारार्पणक्षमेणापि तेन तत्साधने समानार्थसमनंतरप्रत्ययेन व्यभिचारात् तेनाध्यवसायसहितेनापि तत्साधने भ्रांतज्ञानसमनंतरप्रत्ययेनानेकांतात् । तत्त्वतः कस्यचित्तत्कारणत्वाद्यसिद्धेश्च । नापि समानकालस्तस्य स्वतंत्रत्वात्, योग्यताविशेषस्यापि तद्व्यतिरिक्तस्यासंभवात् तस्याप्यनुभाव्यत्वासिद्धेः । परेण योग्यताविशेषेणानुभाव्यत्वेनवस्थानात्, प्रकारांतरासंभवाच्च । नापि बुद्धेर्ग्राहकत्वेन परोनुभवोस्ति, सर्वथानुभाव्यवदनुभावकस्यासंभवे तदघटनात् । ततो बुद्धिरेव स्वयं प्रकाशते ग्राह्यग्राहकवैधुर्यात् । तदुक्तं । "नान्योनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः । ग्राह्यग्राहकवैधुर्यात्स्वयं सैव प्रकाशते ॥" इति ॥ अत्रोच्यते,—

**नान्योनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोपरः । ग्राह्यग्राहकवैधुर्यात्स्वयं सा न प्रकाशते ॥१३॥**

न हि बुद्ध्यान्योनुभाव्यो नास्ति संतानांतरस्याननुभाव्यत्वानुपगमात् । कुतश्चिदवसितस्योपगमात् । तदुपगमे च कुतः स्वसंतानसिद्धिः? पूर्वोत्तरक्षणानां भावतोऽननुभाव्यत्वात् । स्यादाकूतं । यथा वर्तमानबुद्धिः स्वरूपमेव वेदयते न पूर्वामुत्तरां वा बुद्धिं संतानांतरं बहिरर्थं वा । तथातीतानागता च बुद्धिः स्वतः स्वसंविदितः स्वसंतानः स्वसंविदितक्रमवर्त्यनेकबुद्धिक्षणात्मकत्वादिति । तदसत् । वर्तमानया बुद्ध्या पूर्वोत्तरबुद्ध्योरवेदनात् स्वरूपमात्रवेदित्वानिश्चयात् । तं चानुमानबुद्ध्या वेदने । स्वरूपमात्रवेदित्वाविरोध्यप्यसारं । संतानांतरसिद्धिप्रसंगात् । तथा च संतानांतरं स्वसंतानश्चानुमानबुद्ध्यानुभाव्यो न पुनर्बहिरर्थ इति कुतो विभागः सर्वथाविशेषाभावात् । विवादापन्ना बहिरर्थबुद्धिरनालंबना बुद्धित्वात् स्वप्नादिबुद्धिवदित्यनुमानाद्बहिरर्थाननुभाव्यो बुद्ध्या सिद्ध्यति न पुनः संतानांतरं । स्वसंतानश्चेति न बुद्ध्यामहे, स्वप्नसंतानांतरस्वसंतानबुद्धेरनालंबनत्वदर्शनादन्यथापि तथात्वसाधनस्य कर्तुं शक्यत्वात् । बहिरर्थग्राह्यतादूषणस्य च संतानांतरग्राह्यतायां समानत्वात् तस्यास्तत्र कथंचिददूषणत्वे बहिरर्थग्राह्यतायामप्यदूषणत्वात् कथं तत्सत्प्रतिक्षेप इत्यस्त्येव बुद्ध्यानुभाव्यः । एतेन बुद्धेर्बुद्ध्यंतरेणानुभवोपि परोस्तीति निश्चितः ततो न ग्राह्यग्राहकवैधुर्यात् स्वयं बुद्धिरेव प्रकाशते । मा भूत् संतानांतरस्य स्वसंतानस्य वा व्यवस्थितिर्बहिरर्थवत्संवेदनाद्वैतस्य ग्राह्यग्राहकाकारविवेकेन स्वयं प्रकाशनादित्यपरः । तस्यापि संतानांतरासंभावोऽनुभाव्य, संवेदनं न स्यादन्यथा तस्याद्वयस्याप्रसिद्धेः । स्वानुभवनमेव संतानांतराद्यभावानुभवनं संवेदनस्येति च न सुभाषितं, स्वरूपमात्रसंवेदनस्यैवासिद्धेः । न हि क्षणिकानंशस्वभावं संवेदनमनुभूयते, स्पष्टतयानुभवनस्यैव क्षणिकत्वात् । क्षणिकं वेदनमनुभूयत एवेति चेत् न, एकक्षणस्थायित्वस्याक्षणिकत्वस्याभिधानात् । अथ स्पष्टानुभवनमेवैकक्षणस्थायित्वं अनेकक्षणस्थायित्वे तद्विरोधात् । तत्र तदविरोधे वानाद्यनंतस्पष्टानुभवप्रसंगात् । तथा चेदानीं स्पष्टं वेदनमनुभवामीति प्रतीतिर्न स्यादितिमतं । तदसत् । क्षणिकत्वे वेदनस्येदानीमनुभवामीति प्रतीतौ पूर्वं पश्चाच्च तथा प्रतीतिविरोधात् । तदविरोधे वा कथमनाद्यनंतरसंवेदनसिद्धिर्न

भवेत् । सर्वदेदानीमनुभवामीति प्रतीतिरेव हि नित्यता सैव च वर्तमानता तथाप्रतीतेर्विच्छेदाभावात् । ततो न क्षणिकसंवेदनसिद्धिः । इदानीमेवानुभवनं स्पष्टं न पूर्वं न पश्चादिति प्रतीतेः क्षणिक संवेदनमितिचेत्, स्यादेवं यदि पूर्वं पश्चाद्वानुभवस्य विच्छेदः सिध्येत् । न चासौ प्रत्यक्षतः सिध्यति तदनुमानस्य वैफल्यप्रसंगात्, पश्यन्नपीत्यादिग्रंथस्य विरोधात् । प्रत्यक्षपृष्टभाविनो विकल्पादिदानीमनुभवनं ममेति निश्चयान्नोक्तग्रंथविरोधः । तद्बलादिदानीमेवेत्यनिश्चयाच्च नानुमाने नैष्फल्यं ततस्तथा निश्चयादिति चेत्, नैतत्सारं । प्रत्यक्षपृष्टभाविनो विकल्पस्येदानीमनुभवो मे न पूर्वं पश्चाद्वेति विधिनिषेधविषयतयानुत्पत्तौ वर्तमानमात्रानुभवव्यवस्थापकत्वायोगात् । पश्यन्नपीत्यादिविरोधस्य तदवस्थत्वादन्यथा सर्वत्रेदमुपलभे नेदमुपलभेहमिति विकल्पद्वयानुत्पत्तावपि दृष्टव्यवहारप्रसंगात् । तदन्यव्यवच्छेदविकल्पाभावेपीदानीं तेनानुभवननिश्चये तदेवानुमानंनैष्फल्यमिति यत्किंचिदेतत । एतेनानुमानादनुभवस्य पूर्वोत्तरक्षणव्यवच्छेदः सिध्यतीति निराकृतं स्वतस्तेनाध्यक्षतो व्याप्तेरसिद्धेः, परतोनुमानात् सिद्धावनवस्थाप्रसंगात् । विपक्षे बाधकप्रमाणबलाद्व्याप्तिः सिद्धेतिचेत् । किं तत्र बाधक प्रमाणं? न तावदध्यक्ष तस्य क्षणिकत्वनिश्चायित्वेनाक्षणिकत्वे बाधकत्वायोगात् । नाप्यनुमानं क्षणिकत्वविषयं तस्यासिद्धव्याप्तिकत्वात् । प्रथमानुमानात्तद्व्याप्तिसिद्धौ परस्पराश्रयणात् । सति सिद्धव्याप्तिके विपक्षे बाधकेनुमाने प्रथमानुमानस्य सिद्धव्याप्तिकत्वं तत्सिद्धौ च तत्सद्भाव इति । विपक्षे बाधकस्यानुमानस्यापि परस्माद्विपक्षे बाधकानुमानाद्व्याप्तिसिद्धौ सैवानवस्था । एतेन व्यापकानुपलंभात् सत्त्वस्य क्षणिकत्वेन व्याप्तिं साधयन् निक्षिप्तः । सत्त्वमिदमर्थक्रियाया व्याप्तं साधनं क्रमयौगपद्याभ्या, ते चाक्षणिकाद्विनिवर्तमानेर्थक्रिया स्वव्याप्यां निवर्तयतः । सापि निवर्तमाना सत्त्वं । ततन्नीरादर्शिशकुनिन्यायेन क्षणिकत्व एव सत्त्वमवतिष्ठत इति हि प्रमाणांतरं क्रमयौगपद्ययोरर्थक्रियया तस्याश्च सत्त्वेन व्याप्यव्यापकभावस्य सिद्धौ सिध्यति । तस्य बाध्यक्षतः सिध्यसभवेऽनुमानांतरादेव सिद्धौ कथमनवस्था न स्यात्' तत्सिद्धावपि नाक्षणिके क्रमयौगपद्ययोर्निवृत्तिः सिद्धा शश्वदविच्छिन्नात्मन्येवानुभवेऽनेककालवर्तित्वलक्षणस्य क्रमस्योपपत्तेर्यौगपद्यस्य चाविच्छिन्नानेकप्रतिभासलक्षणस्य तत्रैव भावात् सुखसंवेदने प्राच्यदुःखसंवेदनाभावान्नाविच्छिन्नमेकं सवेदन यदनाद्यनंतकालवर्तितया क्रमवत् स्यादितिचेन्न, सुखदुःखाद्याकाराणामनाद्यविद्योपदर्शितानामेव विच्छेदात् । एतेन नानानीलपीतादिप्रतिभासाना देशविच्छेदाद्युगपत्सकलव्यापिनोनुभवस्याविच्छेदाभावः प्रत्युक्तः, तत्त्वतस्तद्वद्विच्छेदाभावात् । ततो न क्षणिकमद्वय सवेदनं नाम तस्य व्यापि नित्यस्यैव प्रतीतिसिद्धत्वात् । तदेवास्तु ब्रह्मतत्त्वमित्यपरस्तं प्रत्याहः–

**यन्न प्रकाशसामान्यं सर्वत्रानुगमात्मकम् । तत्प्रकाशविशेषाणामभावे केन वेद्यते ॥ १४ ॥**

केनचिद्विशेषेण शून्यस्य सवेदनस्यानुभवेपि विशेषांतरेणाशून्यत्वान्न सकलविशेषविरहितत्वेन कस्यचित्तदनुभवः खरशृंगवत् ॥

**नात्र संवेदनं किंचिदनंशं बहिरर्थवत् । प्रत्यक्षं बहिरंतश्च सांशस्यैकस्य वेदनात् ॥ १५ ॥**

यथैव क्षणिकमक्षणिकं वा नानैकं वा बहिर्वस्तु नानंशं तस्य क्षणिकेतरात्मनो नानैकात्मनश्च साक्षात् प्रतिभासनात् तथांत:संवेदनमपि तदविशेषात् ॥

**स्वांशेषु नांशिनो वृत्तौ विकल्पोपात्तदूषणम् । सर्वथार्थांतरत्वस्याभावादंशांशिनोरिह ॥ १६ ॥**
**तादात्म्यपरिणामस्य तयोः सिद्धेः कथंचन । प्रत्यक्षतोनुमानाच्च न प्रतीतिविरुद्धता ॥ १७ ॥**

स्वांशेष्वंशिनः प्रत्येकं कार्त्स्न्येन वृत्तौ बहुत्वमेकदेशेन सावयवत्वमनवस्था चेति न दूषणं सम्यक्तस्य स्वांशेभ्यो भिन्नस्यानभ्युपगमात् । कथंचित्तादात्म्यपरिणामस्य प्रसिद्धेस्तस्यैव समवायत्वेन साधनात् । न-

सप्तविकल्पात्मकवाक्यस्य सकलादेशत्वसिद्धिस्तदा स्यादस्त्येव जीवादिवस्त्वित्यस्य सकलादेशत्वमस्तु । विवक्षितास्तित्वमुखेन शेषानंतधर्मात्मनो वस्तुनस्तथावृत्त्या कथनात् । स्यान्नास्त्येवेत्यस्य च नास्तित्वमुखेन, स्यादवक्तव्यमेवेत्यस्यावक्तव्यत्वमुखेन, स्यादुभयमेवेत्यस्य च क्रमार्पितोभयात्मकत्वमुखेन, स्यादस्त्यवक्तव्यमेवेत्यस्य चास्त्यवक्तव्यत्वमुखेन, स्यान्नास्त्यवक्तव्यमेवेत्यस्य च नास्त्यवक्तव्यत्वमुखेन स्यादुभयावक्तव्यमेवेत्यस्य चोभयावक्तव्यत्वमुखेनेति प्रत्येकं सप्तानामपि वाक्यानां कुतो विकलादेशत्वं? प्रथमेनैव वाक्येन सकलस्य वस्तुनः कथनात् द्वितीयादीनामफलत्वमिति चेत्, तदाप्येकसप्तभंग्या सकलस्य वस्तुनः प्रतिपादनात् परासां सप्तभंगीनामफलत्वं किं न भवेत्? प्रधानभावेन स्वविषयधर्मसप्तकस्वभावस्यैवार्थस्यैकया सप्तभंग्या प्रकथनात्, स्वगोचरधर्मसप्तकांतराणामपराभिः सप्तभंगीभिः कथनान्न तासामफलत्वमिति चेत्, तर्हि प्रथमेन वाक्येन स्वविषयैकधर्मात्मकस्य वस्तुनः प्रधानभावेन कथनात् द्वितीयादिभिः स्वगोचरैकैकधर्मात्मकस्य प्रकाशनात् कुतस्तेषामफलता कथं पुनरर्थस्यैकधर्मात्मकत्वं प्रधानं तथा शब्देनोपात्तत्वात् शेषानंतधर्मात्मकत्वमप्येवं प्रधानमस्त्विति चेन्न, तस्यैकतो वाक्यादश्रूयमाणत्वात् । कथं ततस्तस्य प्रतिपत्तिः अभेदवृत्त्याभेदोपचारेण वा गम्यमानत्वात् । तर्हि श्रूयमाणस्येव गम्यमानस्यापि वाक्यार्थत्वात् प्रधानत्वमन्यथा श्रूयमाणस्याप्यप्रधानत्वमिति चेन्न, अग्निर्माणवक इत्यादि वाक्यैक्यार्थेनानैकांतात् । माणवकेऽग्नित्वाध्यारोपो हि तद्वाक्यार्थो भवति न च प्रधानमारोपितस्याग्नेरप्रधानत्वात् । तत्र तदारोपोपि प्रधानभूत एव तथा शब्देन विवक्षितत्वादिति चेत्, कस्तर्हि गौणः शब्दार्थोस्तु न कश्चिदिति चेन्न, गौणमुख्ययोर्मुख्ये संप्रत्ययवचनात् । घृतमायुरन्नं वै प्राणा इति कारणे कार्योपचारं, मंचाः क्रोशंतीति तात्स्थ्यात्ताच्छब्द्योपचारः । साहचर्याद्यष्टिः पुरुष इति, सामीप्याद्वृक्षा ग्राम इति च गौणं शब्दार्थं व्यवहरन् स्वयमगौणः शब्दार्थः सर्वोपीति कथमातिष्ठेत? न चेदुन्मत्तः । गौण एव च शब्दार्थ इत्यप्ययुक्तं, मुख्याभावे तदनुपपत्तेः । कल्पनारोपितमपि हि सकलं शब्दार्थमाचक्षाणैरगोव्यावृत्तोर्थोदर्थो बुद्धिनिर्भासी गोशब्दस्य मुख्योर्थस्ततोन्यो वाहीकादिर्गौण इत्यभ्युपगंतव्य । तथा च गौणमुख्ययोर्वाक्यार्थयोः सर्वैः शब्दव्यवहारवादिभिरिष्टत्वान्न कस्यचित्तदपह्नवो युक्तोऽन्यत्र वचनानधिकृतेभ्यः । ननु यत्र शब्दादस्खलत्प्रत्ययः स मुख्यः शब्दार्थः श्रूयमाण इव गम्यमानेपि यत्र त्वस्खलत्प्रत्ययः स गौणोस्तु, ततो न श्रूयमाणत्वं मुख्यत्वेन व्याप्तं गौणत्वेन वा गम्यमानत्वं येन शब्दोपात्त एव धर्मो मुख्य. स्यादपरस्तु गौण इति चेन्न, अस्खलत्प्रत्ययत्वस्यापि मुख्यत्वेन व्याप्त्यभावात् प्रकरणादिसिद्धस्यास्खलत्प्रत्ययस्यापि गौणत्वसिद्धेः प्रतिपत्रा बुभुत्सितं वस्तु यदा मुख्योर्थस्तदा तं प्रति प्रयुज्यमानेन शब्देनोपात्तो धर्मः प्रधानभावमनुभवतीति विशेषानंतधर्मेषु गुणभावसिद्धेः । नन्वस्तु प्रथमद्वितीयवाक्याभ्यामेकैकधर्ममुख्येन शेषानंतधर्मात्मकस्य वस्तुनः प्रतिपत्तिः कथंचिदभिहितप्रकाराश्रयणात्तृतीयादिवाक्यैस्तु कथं सत्त्वस्यैव वानंशशब्दस्य तेभ्योऽप्रतिपत्तेरिति चेन्न, तृतीयाद्वाक्याद् द्वाभ्यामात्मकाभ्यां सत्त्वासत्त्वाभ्यां सहार्पिताभ्यां निष्पन्नस्यैकस्यावक्तव्यत्वस्यानंशशब्दस्य प्रतीतेः । चतुर्थात्ताभ्यामेव क्रमार्पिताभ्यामुभयात्मकत्वस्य द्व्यंशस्य प्रत्ययात् । पंचमात्त्रिभिरात्मभिर्द्व्यंशस्यास्त्यवक्तव्यत्वस्य निर्ज्ञानात् । षष्ठाच्च त्रिभिरात्मभिर्द्व्यंशस्य नास्त्यवक्तव्यत्वस्यावगमात् । सप्तमाच्चतुर्भिरात्मभिस्त्र्यंशस्यास्तिनास्त्यवक्तव्यत्वस्यावबोधात् । न च धर्मस्य सांशत्वेनैकस्वभावत्वे वा धर्मित्वप्रसंगः द्वित्वादिसंख्यायास्तथाभावेपि धर्मत्वदर्शनात् । निरंशैकस्वभावा द्वित्वादिसंख्येति चेन्न, द्वे द्रव्ये इति सांशानेकस्वभावता प्रतीतिविरोधात् । संख्येययोर्द्रव्ययोरनेकत्वात्तत्र तथा प्रतीतिरिति चेत्, कथमन्यत्रानेकत्वे तत्र तथाभावप्रत्ययोतिप्रसंगात् । समवायादिति चेत्, स कोन्योन्यत्र कथंचित्तादात्म्यादिति ।

संख्येयवत्कथंचित्तदभिन्नायाः संख्यायाः सांशत्वादनेकस्वभावत्वसिद्धेः । एवं स्वभावस्यानेकत्वेपि तद्वतो द्रव्यस्य कथंचित्तदभिन्नस्यैकत्वानेकांशत्वमवक्तव्यत्वम्य सिद्धमंशस्य चानेकत्वेप्येकधर्मत्वमस्त्यवक्तव्यत्वादेरविरुद्धं, तथा श्रुतज्ञानेवभासमानत्वात् तद्बाधकाभावाच्च । त एतेस्तित्वादयो धर्मा जीवादिवस्तुनि सर्वसामान्येन तदभावेन च, विशिष्टसामान्येन तदभावेन, विशिष्टसामान्येन तदभावसामान्येन च, विशिष्टसामान्येन च द्रव्यसामान्येन गुणसामान्येन च धर्मसमुदायेन तद्व्यतिरेकेण च धर्मसामान्यसंबधेन तदभावेन च धर्मविशेषसंबंधेन तदभावेन च निरूप्यंते । तत्रार्थप्रकरणसभवलिंगौचित्यदेशकालाभिप्रायगम्यः शब्दस्यार्थ इत्यर्थाद्यनाश्रयणेभिप्रायमात्रवशवर्तिना सर्वसामान्येन च वस्तुत्वेन जीवादिरस्त्येव तदभावेन चावस्तुत्वेन नास्त्येवेति निरूप्यते । तथा श्रुत्युपात्तेन विशिष्टसामान्येन जीवादित्वेनास्ति तत्प्रतियोगिना तदभावेनाजीवादित्वेन नास्तीति च भंगद्वय । तेनैव विशिष्टसामान्येनास्ति तदभावसामान्येन वस्त्वंतरात्मना सर्वेण सामान्येन नास्तीति च भंगद्वय, तेनैव विशिष्टसामान्येनास्ति तद्विशेषणमुख्यत्वेन नास्तीति च भगद्वयं, सामान्येनाविशेषितेन द्रव्यत्वेनास्ति विशिष्टसामान्येन प्रतियोगिनैवाजीवादित्वेन नास्तीति च भंगद्वयं, द्रव्यसामान्येनाविशेषितेनैवास्ति गुणसामान्येन गुणत्वेन स एव नास्तीति च भंगद्वयं, धर्मसमुदायेन त्रिकालगोचरानतशक्तिज्ञानादिसमितिरूपेणास्ति तद्व्यतिरेकेणोपलभ्यमानेन रूपेण नास्तीति च भंगद्वयं, धर्मसामान्यसबंधेन यस्य कस्यचिद्धर्मस्याश्रयत्वेनास्ति तदभावेन कस्यचिदपि धर्मस्यानाश्रयत्वेन नास्तीति च भंगद्वयं, धर्मविशेषसबंधेन नित्यत्वचेतनत्वाद्यन्यतमधर्मसंबंधित्वेनास्ति तदभावेन तदसबंधित्वेन नास्तीति च भगद्वयमित्यनेकधा विधिप्रतिषेधकल्पनया सर्वत्र मूलभंगद्वयं निरूपणीयं । अथास्ति जीव इत्यस्तिशब्दवाच्यादर्थाद्भिन्नस्वभावो जीवशब्दवाच्योर्थः स्यादभिन्नस्वभावो वा ? यद्यभिन्नस्वभावस्तदा तयोः सामानाधिकरण्यविशेषत्वाभावो घटकुटशब्दवत् तदन्यतराप्रयोगश्च, तद्वदेव विपर्ययप्रसगो वा । सर्वद्रव्यपर्यायविषयास्तिशब्दवाच्यादभिन्नस्य च जीवस्य सर्वद्रव्यपर्यायात्मकत्वप्रसंगः सर्वद्रव्यपर्यायाणा वा जीवत्वमिति संकरव्यतिकरौ स्याता । यदि पुनरस्तिवाच्यादर्थाद्भिन्न एव जीवशब्दवाच्योर्थः कल्प्यते तदा जीवस्यासद्रूपत्वप्रसगोस्तिशब्दवाच्यादर्थाद्भिन्नत्वात् खरशृंगवत् विपर्ययप्रसंगात् । जीववत्सकलार्थेभ्योभिन्नस्यास्तित्वस्याभावप्रसक्तिरनाश्रयत्वात् । तस्य जीवादिषु समवायाददोषोऽयमितिचेन्न, समवायस्य सत्त्वाद्भिन्नस्यासद्रूपत्वात स तद्वतोः सबधत्वविरोधात् । न च समवाये सत्त्वस्य समवायांतरमुपपन्नं अनवस्थानुषंगात् स्वयं तथानिष्टेश्च । तत्र तस्य विशेषणाभावाददोष इति चेत् सोपि विशेषणाभावः सबंधो यदि सत्त्वाद्भिन्नस्तदा न सद्रूप इति खरविषाणवत्कथ सबधः ? परस्माद्विशेषणीभावात्सत्त्वस्य प्रथमविशेषणीभावे यद्यसद्रूपत्वाभावस्तदा सैवानवस्था तत्रापि सत्त्वस्यभिन्नस्यान्यविशेषणीभावकल्पनादिति न किंचित्सन्नाम । सत्त्वाद्भिन्नस्य सर्वस्य स्वभावस्यासद्रूपत्वप्रसिद्धेरिति । सर्वथैकातवादिनामुपालभो न स्याद्वादिनामस्तिशब्दवाच्यादर्थाज्जीवशब्दवाच्यस्यार्थस्य कथंचिद्भिन्नत्वोपगमात् । तथैव वाचित्यप्रतीतिसद्भावाच्च । पर्यायार्थादेशाद्धि भवनजीवनयोः पर्याययोरस्तिजीवशब्दाभ्यां वाच्ययोः प्रतीतिविशिष्टतया प्रतीतेर्भेदः द्रव्यार्थादेशात्तु तयोरव्यतिरेकादेकतरस्य ग्रहणेनान्यतरस्य ग्रहणादभेदः प्रतिभासत इति न विरोधः संशयो वा तथा निश्चयात् । तत एव न सकरो व्यतिकरो वा, येन रूपेण जीवस्यास्तित्वं तेनैव नास्तित्वानिष्टेः येन च नास्तित्वं तेनैवास्तित्वानुपगमात् तदुभयस्याप्युभयात्मकत्वानास्थानाच्च । न चैवमेकांतोपगमे कश्चिद्दोषः सुनयार्पितस्यैकातस्य समीचीनतया स्थितत्वात् प्रमाणार्पितस्यास्तित्वानेकातस्य प्रसिद्धेः । येनात्मनानेकातस्तेनात्मनानेकांत एवेत्येकांतानुपगोपि नानिष्टः प्रमाणसाधनस्यैवानेकांतत्वसिद्ध. नयसाधनस्यैकात-

त्वव्यवस्थितेरनेकांतोप्यनेकांत इति प्रतिज्ञानात् ॥ तदुक्तं । "अनेकांतोप्यनेकांतः प्रमाणनयसाधनः । अनेकांतः प्रमाणात्ते तदेकांतार्पितान्नयात्" इति । न चैवमनवस्थानेकांतस्यैकांतापेक्षित्वेनैवानेकांतत्व-व्यवस्थितेः एकांतस्याप्यनेकांतापेक्षितयैवैकांतव्यवस्थानात् । न चेत्थमन्योन्याश्रयणं, स्वरूपेणानेकांतस्य वस्तुनः प्रसिद्धत्वेनैकांतानपेक्षत्वादेकांतस्याप्यनेकातानपेक्षत्वात् । तत एव तयोरविनाभावस्यान्योन्या-पेक्षया प्रसिद्धेः कारकज्ञापकादिविशेषवत् । तदुक्तं । "धर्मधर्म्यविनाभावः सिद्ध्यत्यन्योन्यवीक्षया । न स्वरूपं स्वतो ह्येतत्कारकज्ञापकांगवत् ॥" इति । किं चार्थाभिधानप्रत्यायनात् तुल्यनामत्वात्तदन्यतमस्या-पह्नवे सकलव्यवहारविलोपात्तेषां भ्रातत्वैकाते कस्यचिदभ्रांतस्य तत्त्वस्याप्रतिष्ठितेरवश्यं परमार्थसत्त्वमुररी-कर्तव्यं । तथा चार्थाभिधानप्रत्ययात्मना स्यादस्त्येव जीवादिस्तद्विपरीतात्मना तु स एव नास्तीति भंगद्वयं सर्वप्रवादिनां सिद्धमन्यथा स्वेष्टतत्त्वाव्यवस्थितेः । तथा चोक्त । "सदेव सर्वं को नेच्छेत्स्वरूपादि-चतुष्टयात् । असदेव विपर्यासान्न चेन्न व्यवतिष्ठते ॥" इति कथमवक्तव्यो जीवादिः ? द्वाभ्यां यथोदित-प्रकाराभ्यां प्रतियोगिभ्यां धर्माभ्यामवधारणात्मकाभ्या युगपत्प्रधाननयार्पिताभ्यामेकस्य वस्तुनो भवि-त्सायां तादृशस्य शब्दस्य प्रकरणादेश्चासभवादिति केचित् । तत्र कोयं गुणाना युगपद्भावो नामेति चिंत्यं । कालाद्यभेदवृत्तिरिति चेत् न, परस्परविरुद्धानां गुणानामेकत्र वस्तुन्येकस्मिन् काले वृत्तेरदर्शनात् सुखदुःखादिवत् । नाप्यात्मरूपेणाभेदवृत्तिस्तेषा युगपद्भावस्तदात्मरूपस्य परस्परविभक्तत्वात्तद्वत् । न चैकद्रव्याधारतया वृत्तिर्युगपद्भावस्तेषां भिन्नाधारतया प्रतीतेः शीतोष्णस्पर्शवत् । सबंधाभेदो युगपद्भाव-इत्यप्ययुक्तं, तेषा संबधस्य भिन्नत्वाद्देवदत्तस्य छत्रदंडादिसंबंधवत समवायस्याप्येकत्वाघटनाद्भिन्नाभिधान-प्रत्ययहेतुत्वात् सयोगवत् । न चोपकाराभेदस्तेषा युगपद्भावः प्रतिगुणमुपकारस्य भिन्नत्वान्नीलपीताद्य-नुरंजनवत् पटादौ । न चैकदेशो गुणिनः सभवति निरंशत्वोपगमात् । यतो गुणिदेशाभेदो युगपद्भावो गुणानामुपपद्येत । न तेषामन्योन्यं संसर्गो युगपद्भावस्तस्यासंभवादासंसृष्टरूपत्वाद्गुणाना शुक्लकृष्णादिवत् तत्संसर्गे गुणभेदविरोधात् । न च शब्दाभेदो युगपद्भावो गुणाना भिन्नशब्दाभिधेयत्वान्नीलादिवत् । ततो युगपद्भावात् सदसत्त्वादिगुणानां न तद्विवक्षा युक्ता यस्यामवक्तव्यं वस्तु स्यात् इत्येकातवादिना-मुपद्रवः, स्याद्वादिना कालादिभिरभेदवृत्तेः परस्परविरुद्धेष्वपि गुणेषु सत्त्वादिष्वेकत्र वस्तुनि प्रसिद्धेः प्रमाणे तथैव प्रतिभासनात् स्वरूपादिचतुष्टयापेक्षया विरोधाभावात् । केवलं युगपद्वाचकाभावात्सद-सत्त्वयोरेकत्रावाच्यता सत्तामात्रनिबंधनत्वाभावाद्वाच्यतायाः । विद्यमानमपि हि सदसत्त्वगुणद्वयं युग-पदेकत्र सदित्यभिधानेन वक्तुमशक्यं तस्यासत्त्वप्रतिपादनासमर्थत्वात् तथैवासदित्यभिधानेन तद्वक्तु-मशक्यं तस्य सत्त्वप्रत्यायने सामर्थ्याभावात् । साकेतिकमेकपदं तदभिधातु समर्थमित्यपि न सत्य, तस्यापि क्रमेणार्थद्वयप्रत्यायने सामर्थ्योपपत्तेः । तौ सदिति शतृशानयोः संकेतितसच्छब्दवत् द्वंद्ववृत्ति-पदं तयोः सकृदभिधायकमित्यनेनापास्तं, सदसत्त्वे इत्यादिपदस्य क्रमेण धर्मद्वयप्रत्यायनसमर्थत्वात् । कर्मधारयादिवृत्तिपदमपि न तयोरभिधायकं, तत एव प्रधानभावेन धर्मद्वयप्रत्यायने तस्यासामर्थ्याच्च । वाक्यं तयोरभिधायकमनेनैवापास्तमिति सकलवाचकरहितत्वादवक्तव्यं वस्तु युगपत्सदसत्त्वाभ्या प्रधान-भावार्पिताभ्यामाक्रात व्यवतिष्ठते तच्च न सर्वथैवावक्तव्यमेव शब्देनास्य वक्तव्यत्वादित्येके । ते च पृष्टव्याः । किमभिधेयमवक्तव्यशब्दस्येति ? युगपत्प्रधानभूतसदसत्त्वादिधर्मद्वयाक्रात वस्त्विति चेत्, कथं तस्य सकलवाचकरहितत्व ? अवक्तव्यपदस्यैव तद्वाचकस्य सद्भावात् । यथा वक्तव्यमिति पदं साकेतिकं तस्य वाचक तथान्यदपि किं न भवेत् ? तस्य क्रमेणैव तत्प्रत्यायकत्वादिति चेत्, तत एवावक्तव्यमितिपदस्य तद्वाचकत्वं माभूत् । ततोपि हि सकृत्प्रधानभूतसदसत्त्वादिधर्माक्रातं वस्तु क्रमे-

णैव प्रतीयते सांकेतिकपदांतरादिव विशेषाभावात् वक्तव्यत्वाभावस्यैवैकस्य धर्मस्यावक्तव्यपदेन प्रत्याय-नाच्च न तथाविधवस्तुप्रत्यायनं सुघटं येनावक्तव्यपदेन तद्व्यक्तमिति युज्यते। कथमिदानीं "अवाच्य-तैकांतेप्युक्तिर्नावाच्यमिति युज्यते" इत्युक्तं घटते? सकृद्धर्मद्वयाक्रांतत्वेनेव सत्त्वाद्येकैकधर्मसमाक्रांत-त्वेनाप्यवाच्यत्वे वस्तुनो वाच्यत्वाभावधर्मेणाक्रांतस्यावाच्यपदेनाभिधानं न युज्यते इति व्याख्यानात्। येन रूपेणावाच्यं तेनैव वाच्यमवाच्यशब्देन वस्त्विति व्याचक्षाणो वस्तु येनात्मना सत् तेनैवा-सदिति विरोधान्नोभयैकात्म्य वस्तुन इति कथं व्यवस्थापयेत्? सर्वत्र स्याद्वादन्यायविद्वेषितापत्तेः। ततो वस्तुनि मुख्यवृत्त्या समानबलयोः सदसत्त्वयोः परस्पराभिधानव्याघातेन व्याघाते सतीष्टविपरीत-निर्गुणत्वापत्तेः। विवक्षितोभयगुणेनाभिधानात् अवक्तव्योर्थ इत्ययमपि सकलादेशः परस्परावधारित-विविक्तरूपैकात्मकाभ्यां गुणाभ्या गुणिविशेषणत्वेन युगपदुपक्षिप्ताभ्यामविवक्षितांशभेदस्य वस्तुनः समस्तै केन गुणरूपेणाभेदवृत्त्याभेदोपचारेण वाभिधातु प्रक्रांतत्वात्। स चावक्तव्यशब्देनान्यैश्च षड्भिर्वचनैः पर्यायांतरविवक्षया च वक्तव्यत्वात्स्यादव्यक्तव्य इति निर्णीतमेतत्। एतेन सर्वथा वस्तु सत् स्वलक्षण-मवक्तव्यमेवेतिमतमपास्त स्वलक्षणमनिर्देश्यमित्यादिवचनव्यवहारस्य तत्राभावप्रसंगात्। यदि पुनरस्व-लक्षणं शब्देनोच्यते निर्देश्यव्यावृत्त्या च निर्देश्यशब्देन विकल्पप्रतिभासिन एवाभिधानात् न तु वस्तु रूपं परामृश्यत इति मतं, तदा कथं वस्तु तथा प्रतिपन्नं स्यात्? तथा व्यवसायादिति चेत्, सोपि व्यवसायो यदि वस्तुसंस्पर्शी शब्दस्तं स्पृशतु करणवत्। न हि करणजनितं ज्ञानं वस्तु संस्पृशति न पुनः करणमिति युक्तं। करणमुपचारात्तत्स्पृशतीति चेत् तथा शब्दोपीति समानं। शब्दजनितो व्यवसा-योपि न वस्तु सम्पृशतीति चेन्न कथ ततो वस्तुरूपं प्रत्येयं? भ्रांतिमात्रादिति चेत्, न हि परमार्थ-तस्तदनिर्देश्यमवधारणं वा सिध्येत्। दर्शनात्तथा तत्सिद्धिरिति चेत् न, तस्यापि तत्रासामर्थ्यात्। न हि प्रत्यक्षं भावस्यानिर्देश्यता प्रत्येति निर्देशयोग्यस्य साधारणासाधारणरूपस्य वस्तुनस्तेन साक्षात्कर-णात्। स्वलक्षणव्यक्तिरिक्ता केयं निर्देश्यता साधारणता वा प्रतिभातीति चेत् तस्यासाधारणतानिर्देश्यता वा केति समः पर्यनुयोगः। स्वलक्षणत्वमेव सेति चेत् समः समाधिः, साधारणतानिर्देश्यतयोरपि तत्स्वरूपत्वात्। तर्हि निर्देश्य साधारणमिति स्वलक्षणमेव नामांतरेणोक्त स्यादिति चेत् तवाप्यसाधारण-मनिर्देश्यमिति किं न नामांतरेण तदेवाभिमत। तथेष्टौ वस्तु न साधारणं नाप्यसाधारणं न निर्देश्यं नाप्यनिर्देश्यमन्यथा चेत्यायातं। ततोऽकिंचिद्रूपं जात्यंतरं भवन्न दूरीकर्तव्य गत्यंतराभावात्। तद-किंचिद्रूप चेत् कथ वस्तु व्याघातं सकृत्कल्पितरूपाभावादकिंचिद्रूप नानुभूयमानरूपाभावादिति चेत् तवाप्यसाधारणं। तत्किमिदानीमनुभूयमानरूपं वस्तु स्थितं तथा वा? स्थाने तैमिरिकानुभूयमानमपी-दुद्वयं वस्तु स्यात्। सुनिर्णीतासंभवद्बाधकप्रमाणं वस्तु नान्यदिति चेत् तर्हि यथा प्रत्यक्षतोनुभूयमानं तादृशं वस्तु तद्वल्लिंगशब्दादिविकल्पोपदर्शितमपि देशकालनरांतराबाधितरूपत्वे सति किं नाभ्युपेयते विशेषाभावात्। ततो जात्यंतरमेव सर्वथैकांतकल्पनातीत वस्तुत्वमित्युक्तं स्यादवक्तव्यमिति सूक्तं "क्रमार्पिताभ्यां तु सदसत्त्वाभ्या विशेषित"। जीवादि वस्तु स्यादस्ति च नास्ति चेति वक्तुं शक्य-त्वाद्वक्तव्यं स्यादस्तीत्यादिवत्। कथमस्त्यवक्तव्यमिति चेत प्रतिषेधशब्देन वक्तव्यमेवास्तीत्यादि विधि-शब्देनावक्तव्यमित्येके तदयुक्तं, सर्वथाप्यस्तित्वेनावक्तव्यस्य नास्तित्वेन वक्तव्यतानुपपत्तेः विधिपूर्वक-त्वात् प्रतिषेधस्य। सर्वथैकांतप्रतिषेधोपि हि विधिपूर्वक एवान्यथा मिथ्यादृष्टिगुणस्थानाभावप्रसंगात्। दुर्नयोपकल्पितं रूप सुनयप्रमाणविषयभूतं न भवतीति प्रतिषेधे सर्वथैकांतस्य न कश्चिद्व्याघातः। अस्ति-त्वविशिष्टतया सहार्पिततदन्यधर्मद्वयविशिष्टतया च वस्तुनि प्रतिपित्सिते तदस्त्यवक्तव्यमित्यन्ये, तदप्य-

सारं । तत्रास्त्यवक्तव्यावक्तव्यादिभंगांतरप्रसंगात् । ततोपि सहार्पिततदन्यधर्मद्वयविशिष्टस्य ततोप्यपरसहार्पितधर्मद्वयविशिष्टस्य वस्तुनो विवक्षाया निराकर्तुमशक्तेः प्रतियोगिधर्मयुगलानामेकत्र वस्तुन्यनंतानां संभवात् तेषां च सहार्पितानां वक्तुमशक्यत्वात् अस्त्यनंतावक्तव्यं वस्तु स्यात् तच्चानिष्टं । येन रूपेण वस्त्विति तेन तत्प्रतियोगिना च सहाक्रांतं यदा प्रतिपत्तुमिष्टं तदास्त्यवक्तव्यमिति केचित्, तेपि यावद्भिः स्वभावैः यावंति वस्तुनोस्तित्वानि तत्प्रतियोगिभिस्तावद्भिरेव धर्मैः, यावंति च नास्तित्वानि तद्युगलैः सहार्पितैस्तावंत्यवक्तव्यानि च रूपाणि ततस्तावंत्यः सप्तभंग्य इत्याचक्षते चेत् प्रतिघ्नत्येव युक्त्यागमाविरोधात् । एतेन नास्त्यवक्तव्यं चिंतितं प्रत्येयं, स्यादस्ति नास्त्यवक्तव्यं च वस्त्विति प्रमाणसप्तभंगी सकलविरोधवैधुर्यात् सिद्धा । नयसप्तभंगी तु नयसूत्रे प्रपंचतो निरूपयिष्यते । ततः परार्थोधिगमः प्रमाणनयैर्वचनात्मभिः कर्तव्यः स्वार्थ इव ज्ञानात्मभिः, अन्यथा कार्त्स्न्येनैकदेशेन च तत्त्वार्थाधिगमानुपपत्तेः ॥

तदेवं संक्षेपतोधिगमोपायं प्रतिपाद्य मध्यमप्रस्थानतस्तमुपदर्शयितुमनाः सूत्रकारः प्राह;—

## निर्देशस्वामित्वसाधनाधिकरणस्थितिविधानतः ॥ ७ ॥

निर्देशादीनामितरेतरयोगे द्वंद्वः करणनिर्देशश्च बहुवचनांतः प्रत्येयस्तथा तसि विधानात् । स्थितिशब्दस्य स्वतंत्रत्वादल्पाक्षरत्वाच्च पूर्वनिपातोस्त्विति न चोद्यं, बहुप्वनियमात् । सर्वस्य निर्देशपूर्वकत्वात्स्वामित्वादिनिरूपणस्य पूर्वं निर्देशग्रहणमर्थान्न्यायान्न विरुध्यते स्वामित्वादीनां तु प्रश्नवशात् क्रमः । ननु च सक्षिप्तैः प्रमाणनयैः संक्षेपतोऽधिगमो वक्तव्यो मध्यमप्रस्थानतस्तैरेव मध्यमप्रपंचेन पुनर्निर्देशादिभिस्ततो नेदं सूत्रमारंभणीयमित्यनुपपत्तिचोदनायामिदमाह;—

**निर्देशाद्यैश्च कर्तव्योधिगमः कांश्चन प्रति । इत्याह सूत्रमाचार्यः प्रतिपाद्यानुरोधतः ॥ १ ॥**

ये हि निर्देश्यमानादिषु स्वभावेषु तन्वाप्रतिपन्नाः प्रतिपाद्यास्तान् प्रति निर्देशादिभिस्तेषामधिगमः कर्तव्यो न केवलं प्रमाणनयैरेवेति सूक्तं निर्देशादिसूत्रं विनेयाशयवशवर्तित्वात्सूत्रकारवचनस्य । विनेयाशयः कुतस्तादृश इति चेत् ततोन्यादृशः कुतः तथा विवादादिति । तत एवायमीदृशोस्तु न्यायस्य समानत्वात् ॥

किं पुनर्निर्देशादय इत्याह;—

**यत्किमित्यनुयोगेर्थस्वरूपप्रतिपादनम् । कार्त्स्न्यतो देशतो वापि स निर्देशो विदां मतः ॥२॥**
**कस्य चेत्यनुयोगे सत्याधिपत्यनिवेदनं । स्वामित्वं साधनं केनेत्यनुयोगे तथा वचः ॥ ३ ॥**
**केति पर्यनुयोगे तु वचोधिकरणं विदुः । कियच्चिरमिति प्रश्ने प्रत्युत्तरवचः स्थितिः ॥ ४ ॥**
**कतिधेदमिति प्रश्ने वचनं तत्त्ववेदिनाम् । विधानं कीर्तितं शब्दं तत्त्वऽज्ञानं च गम्यताम्॥५॥**

किं कस्य केन कस्मिन् कियच्चिरं कतिविधं वा वस्तु तद्रूपं चेत्यनुयोगे कार्त्स्न्येन देशेन च तथा प्रतिवचनं । निर्देशादय इति वचनात् प्रवक्तुः पदार्थाः शब्दात्मकास्ते प्रत्येयाः तथा प्रकीर्तितास्तु सर्वे सामर्थ्यात्ते ज्ञानात्मका गम्यंतेऽन्यथा तदनुपपत्तेः । सत्यज्ञानपूर्वका मिथ्याज्ञानपूर्वका वा ? शब्दा निर्देशादयः सत्या नाम सुपुप्तादिवत्, नाप्यसत्या एव ते सवादकत्वात् प्रत्यक्षादिवत् ॥

किं स्वभावैर्निर्देशादिभिरर्थस्याधिगमः स्यादित्याह;—

**तैरर्थाधिगमो भेदात्स्यात्प्रमाणनयात्मभिः । अधिगम्यस्वभावैर्वा वस्तुनः कर्मसाधनः ॥ ६ ॥**

कर्तृस्थोऽधिगमस्तावद्वस्तुनः साकल्येन प्रमाणात्मभिर्भेदेन निर्देशादिभिर्भवतीति प्रमाणविशेषास्त्वेते ।

देशस्तु नयात्मभिरिति नयाः ततो नाप्रमाणनयात्मकैस्तैरधिगतिरिष्टा यतो व्याघातः । कस्य पुनः प्रमाणस्यैते विशेषाः श्रुतस्यास्पष्टसर्वार्थविषयता प्रतीतेरिति केचित् । मतिश्रुतयोरित्यपरे । तेत्र प्रष्टव्याः । कुतो मतेर्भेदास्ते इति ? मतिपूर्वकत्वादुपचारादिति चेन्न, अवधिमनःपर्ययविशेषत्वानुषगात् । यथैव हि मत्यार्थं परिच्छिद्य श्रुतज्ञानेन परामृशन्निर्देशादिभिः प्ररूपयति तथावधिमनःपर्ययेण वा । न चैवं, श्रुतज्ञानस्य तत्पूर्वकत्वप्रसंगः साक्षात्तस्यानिंद्रियमतिपूर्वकत्वात् परंपरया तु तत्पूर्वकत्वं नानिष्टं । शब्दात्मनस्तु श्रुतस्य साक्षादपि नावधिमनःपर्ययपूर्वकत्वं विरुध्यते केवलपूर्वकत्ववत् । ततो मुख्यतः श्रुतस्यैव भेदा निर्देशादयः प्रतिपत्तव्याः किमुपचारेण, प्रयोजनाभावात् । तत एव श्रुतैकदेशलक्षणनयविशेषाश्च ते व्यवतिष्ठंते । येषां तु श्रुतं प्रमाणमेव तेषां तद्वचनमसाधनांगतया निग्रहस्थानमासज्यत इति कचित्कथंचित्प्रश्नप्रतिवचनव्यवहारो न स्यात् । स्वपरार्थानुमानात्मकोसौ इति चेन्न, तस्य सर्वत्राप्रवृत्तेरत्यंतपरोक्षेष्वर्थेषु तदभावप्रसगात् । न च श्रुतादन्यदेव स्वार्थानुमान मतिपूर्वकं परार्थानुमानं चेति, तद्भेदत्वमिष्टमेव निर्देशादीना । प्रामाण्यं पुनः श्रुतस्याग्रे समर्थयिष्यत इति नेह प्रतन्यते । कर्मस्थः पुनरधिगमोर्थानामधिगम्यमानाना स्वभावभूतैरेव निर्देशादिभिः कार्त्स्न्यैकदेशाभ्या प्रमाणनयविषयैर्व्यवस्थाप्यते । निर्देश्यमानत्वादिभिरेव धर्मैरर्थानामधिगतिप्रतीतेः कर्मत्वात्तेषां कथं करणत्वेन घटनेति चेत्, तथा प्रतीतेः । अग्नेरुष्णत्वेनाधिगम इत्यत्र यथा । नन्वग्नेः कर्मणः करणमुष्णत्वं भिन्नमेवेति चेत् न, तद्भेदैकातस्य निराकरणात् । कथंचिद्भेदस्तु समानोन्यत्र । न हि निर्देशत्वादयो धर्मा. करणतया समभिधीयमाना जीवादेः कर्मणः पर्यायार्थाद्भिन्ना नेष्यंते । द्रव्यार्थात्तु ततस्तेषामभेदेपि भेदोपचारात्कर्मकरणनिर्देशघटनेति केचित् । परे पुनः कर्मसाधनाधिगमपक्षे निर्देश्यत्वादीना कर्मतया प्रतीतेः करणत्वमेव नेच्छंति तेषां विशेषणत्वेन घटनात् । न हि यथाग्निरुष्णत्वेन विशिष्टोधिगमोपायैरधिगम्यत इति प्रतीतिरविरुद्धा तथा सर्वेर्था निर्देश्यादिभिर्भावैरधिगम्यत इति निर्णयोप्यविरुद्धो नावधार्यते । तथा सति परापरकरणपरिकल्पनायां मुख्यतो गुणतो वानवस्थाप्रसक्तिरपि निवारिता स्यात् । तदपरिकल्पनायां वा स्वाभिमतधर्माणामपि करणत्वं मा भूदित्यपि चोद्यमानमनवकाश्यं स्यात् । नन्वेवमपरापरविशेषणकल्पनायामप्यनवस्था विशेषणांतररहितस्य वा जीवादेः स्वाभिमतधर्मविशेषणैः प्रतिपत्तौ तैरपि रहितस्य प्रतिपत्तिरस्तु विशेषाभावादिति चेन्न, विशेष्यात् कथंचिदभिन्नत्वाद्विशेषणाना । वस्तुतोऽनंता विधयोपि हि धर्मा निर्देशादिभिः सगृहीता विशेषणान्येव, तद्व्यतिरिक्तस्य धर्मस्यासंभवात् । तत्र जीवादिवस्तु विशेष्यमेव द्रव्यार्थादेशात् निर्देश्यत्वादि विशेषणमेव पर्यायार्थात् । प्रमाणादेशादपि विशेषणविशेष्यात्मकं वस्तु जात्यंतरमिति प्ररूपणाया नोक्तदोषावकाशः । नन्वेवं निर्देशादिधर्माणां करणत्वपक्षेपि न परापरधर्मकरणत्वपरिकल्पनादनवस्था तद्व्यतिरेकेण परापरधर्माणामभावात्तेषा तु करणत्वं तैरधिगम्यमानस्यार्थस्य कर्मता नयादेशात्, प्रमाणादेशात्तु कर्मकरणात्मकं जात्यंतरं वस्तु प्ररूप्यते इति न किंचिदवद्यं । नैतत्साधीयः । करणत्वे निर्देशादीनां कर्मसाधनतानुपपत्तेः विशेषणत्वे तु तदुपपत्तेः । विशेषणविशेष्यभूतस्य जीवाद्यर्थस्य कर्मसाधनोधिगमः प्रतिपत्तु शक्यत इति विशेषणत्वपक्ष एव श्रेयान् सकलविशेषणरहितत्वाद्वस्तुनो न संभवत्येव निर्दिश्यमानरूपमिति मतमपाकुर्वन्नाह;—

**भावा येन निरूप्यंते तद्रूपं नास्ति तत्त्वतः । तत्स्वरूपवचो मिथ्येत्ययुक्तं निःप्रमाणकम् ॥७॥**
**यत्तदेकमनेकं च रूपं तेषां प्रतीयते । प्रत्यक्षतोनुमानाच्चाबाधितादागमादपि ॥ ८ ॥**

न हि प्रत्यक्षानुमेयागमगम्यमानानामर्थानां प्रत्यक्षानुमानागमैरेकमनेकं च रूपं परस्परापेक्षं न

प्रतीयते परस्परनिराकरणप्रवणस्यैव तस्याप्रतीतेः। न चाप्रतीयमानस्य सर्वथैकांतस्याप्यवस्थितौ प्रतीयमानस्यापि जात्यंतरस्यावस्थितिर्नाम स्वेष्टरूपस्यापि तत्प्रसंगात्। तथा चैकरूपाभावस्य भावेप्यनवस्थितौ स्यादेवैकरूपस्य विधिस्तदनवस्थितौ अनेकरूपस्य परस्परव्यवच्छेदरूपयोरेकतरप्रतिषेधोन्यतरस्य विधेरवश्यं भावान्नीलत्वानीलत्ववत् परस्परव्यवच्छेदस्वभावौ एकरूपभावाभावौ प्रतीतौ, तदनेनानेकरूपाभावस्य भावेष्वनवस्थितावनेकरूपस्य विधिस्तदनवस्थितावेकरूपस्य निवेदितः समानत्वान्न्यायस्य न तु वाध्यक्षे सकलधर्मरहितस्य स्वलक्षणस्य प्रतिभासनात् न तत्रैकमनेकं वा रूपं परस्परं सापेक्षं निरपेक्षं वा तद्रहितत्वं वा प्रतिभाति कल्पनारोपितस्य तु तथा प्रतिभासनस्य तत्त्वतोसत्त्वात्। संवृत्त्या तत्सद्भावोभीष्ट एव। तथा चैकरूपतदभावयोरनेकरूपतदभावयोश्चैकानेकरूपयोः परस्परव्यवच्छेदस्वभावयोरेकतरस्य प्रतिषेधेऽन्यतरस्य विधेरवश्यंभावेपि न किंचिद्विरुद्धं, भावाभावोभयव्यवहारस्यानादिशब्दविकल्पवासनोद्भूतविकल्पपरिनिष्ठितस्य शब्दार्थतयोपगमात्। तदुक्तं। "अनादिवासनोद्भूतविकल्पपरिनिष्ठितः। शब्दार्थस्त्रिविधो धर्मो भावाभावोभयाश्रयः॥" इति केचित्। तेपि नानवद्यवचसः। सुखनीलादीनामपि रूपाणां कल्पितत्वप्रसंगात्। स्पष्टमवभासमानत्वान्न तेषां कल्पितत्वमिति चेन्न, स्वप्नावभासिभिरनेकांतात्। न हि चैषामपि कल्पितत्वं मानसविभ्रमात्मना स्वप्नस्योपगमात् तस्य करणजविभ्रमात्मनोपगमे वा कथमिंद्रियजविभ्रमात्तज्ज्ञातेः पृथक् प्ररूपणं न विरुध्यते। मानसविभ्रमत्वेपि विशदत्वं स्वप्नस्य विरुध्यत इति चेन्न, विशदाक्षज्ञानवासनासद्भूतत्वेन तस्य वैशद्यसंभवात्। न च तत्र विशदरूपतयावभासमानानामपि सुखनीलादीना पारमार्थिकत्वं विसवादात्। तद्वज्जाग्रद्दशायामपि तेषामनादीद्रियादिजज्ञानवासनोद्भूतप्रतिभासपरिनिष्ठितत्वात्प्रत्यक्षा एव ते न वस्तुस्वभावा इति शक्यं वक्तुं। बाधकाभावाद्भ्रान्तवास्ते इति चेत्, शब्दार्थास्तथा संतु। न चाभावस्यापि शब्दार्थत्वात्सर्वशब्दार्थानामवास्तवत्वमिति युक्त, भावातररूपत्वादभावस्य। ननु तुच्छाभावस्याशब्दार्थत्वे कथ प्रतिषेधो नाम निर्विषयप्रसंगादिति चेन्न, वस्तुस्वभावस्याभावस्य विधानादेव तुच्छस्वभावस्य तस्य प्रतिषेधसिद्धेः क्वचिदनेकांतविधानात्। सर्वथैकांतप्रतिषेधसिद्धिवत् तथा तस्य मुख्यः प्रतिषेधो न स्यादिति चेन्न किंचिदनिष्टं, न हि सर्वस्य मुख्येनैव प्रतिषेधेन भवितव्यं गौणेन वेति नियमोस्ति यथाप्रतीतस्योपगमात्। ननु गौणेपि प्रतिषेधे तुच्छाभावस्य शब्दार्थत्वसिद्धिर्गम्यमानस्य शब्दार्थत्वाविरोधात् सर्वथैकातवदिति चेन्न, तस्यागम्यमानत्वात्तद्वत्। यथैव हि वस्तुनोनेकातात्मकत्वविधानात् सर्वथैकांताभावो गम्यते न सर्वथैकातस्तथा वस्तुरूपस्याभावस्य विधानातुच्छाभावस्याभावो न तु स गम्यमानः। ननु तुच्छाभावस्याभावगतौ तस्य गतिरवश्यंभाविनी प्रतिषेध्यनांतरीयकत्वात् प्रतिषेधस्येति चेन्न, व्याघातात्। तुच्छाभावस्याभावश्च कुतश्चिद्गम्यते भावश्चेति को हि ब्रूयात्स्वस्थः। ननु वस्तुरूपस्याभावस्य विधानात्तुच्छाभावस्याभावगतिस्तद्गतेस्तस्य गतिस्ततो न व्याघातो नाम, यत एव हि तस्याभावगतिस्तत एव भावस्यापि गतौ व्याघातो नान्यथेति चेन्न, सामस्त्येन तस्याभावगतौ पुनर्भावगतेर्व्याहतेरवस्थानात्। प्रतिनियतदेशादितया तु कस्यचिदभावगतावपि न भावगतिर्विहन्यत इति युक्तं। कथमिदानीं "सञ्ज्ञिनः प्रतिषेधो न प्रतिषेध्यादृते क्वचित्" इति मतं न विरुध्यते? तुच्छाभावस्य प्रतिषेध्यस्याभावेपि प्रतिषेधसिद्धेरन्यथा तस्य शब्दार्थतापत्तेरिति चेन्न, सञ्ज्ञिनः सम्यग्ज्ञानवतः प्रतिषेध्यादृते न क्वचिदंतर्बहिर्वा प्रतिषेध इति व्याख्यानात्तदविरोधात्। सकलप्रमाणाविषयस्य तुच्छाभावस्य प्रतिषेधः स्वयमनुभूतसकलप्रमाणाविषयत्वेन तदनुवदनमेवेति स्यात्प्रतिषेधादृते प्रतिषेधः स्यान्नेत्यनेकांतवादिनामविरोधः प्रमाणवृत्तातवादपरत्वात्तेषा। न हि यथा जीवादिवस्तु प्रतिनियतदेशादितया विद्यमानमेव देशांतरादितया नास्तीति प्रमाणमुप-

दर्शयति तथा तुच्छाभावं तस्य भावरूपत्वप्रसंगात् । सर्वत्र सर्वदा सर्वथा वस्तुरूपमेवाभावं तदुपदर्शयति तथा तुच्छाभावाभावमुपदर्शयतीति तद्वचने दोषाभावः । नन्वेवं तुच्छाभावसदृशस्यानर्थकत्वे प्रयोगो न युक्तोतिप्रसंगात्, प्रयोगे पुनरर्थः कश्चिद्वक्तव्यः स च बहिर्भूतो नास्त्येव च कल्पनारूढस्त्वन्यव्यवच्छेद एवोक्तः स्याद्वत्सर्वशब्दानामन्यापोहविषयत्वे सिद्धेर्न वास्तवाः शब्दार्था इति चेत् नैतदपि सारं, अभावशब्दस्याभावसामान्यविषयत्वात्तस्य विवादापन्नत्वात् । सर्वो हि किमयमभावो वस्तुधर्मः किं वा तुच्छ इति प्रतिपद्यते न नास्तीति प्रत्ययार्थोऽभावमात्रे । तत्र च वस्तुधर्मतामभावस्याचक्षाणाः स्याद्वादिनः कथमभावशब्दं कल्पितार्थं स्वीकुर्युः ? स्वय तुच्छरूपतां तु तस्य निराकुर्वतः परैरारोपितामाशंकितां वानुवदतीत्युक्तप्रायं । न चात्यंतासंभविनो रूपस्य वस्तुन्यारोपितस्य केनचिदाशंकितस्य चातुच्छादेः सर्वशब्दानामन्यव्यवच्छेदविषयत्वप्रसजन प्रायः प्रतीतिविरोधात् । कथमन्यथा कस्यचित्प्रत्यक्षस्य नीलविषयत्वे सर्वप्रत्यक्षाणा नीलविषयत्वप्रसंजनं नानुज्ञायते सर्वथा विशेषाभावात् । अथ यत्र प्रत्यक्षे नीलं प्रतिभासते निर्बाधात्तन्नीलविषय यत्र पीतादि तत्तद्विषयमित्यनुगम्यते तर्हि यत्र शाब्दे ज्ञाने वस्तुरूपमकल्पितमाभाति तद्वस्तुरूपविषयं यत्र तु कल्पनारोपितरूपं तत्तद्गोचरमित्युक्तं । ततः शब्दार्थाना भावाभावोभयधर्माणामभावादिवासनोदितविकल्पपरिनिष्ठितत्वे प्रत्यक्षार्थानामपि तत्स्यात् तेषां बाधकाभावात् । पारमार्थिकत्वे वा तत एव शब्दार्थानामपि तद्भवेदिति न प्रतिपादितविरोधाभावः । यदप्युक्त प्रत्यक्षे सकलधर्मरहितस्य स्वलक्षणस्य प्रतिभासनान्न तत्रैकमनेकं वा रूपं वा परस्परसापेक्षं वा निरपेक्षं वा तद्रहित वा प्रतिभातीति । तदपि मोहविलसितमेव, अनेकांतात्मकवस्तुप्रतीतेरपह्नवात् । को हि महामोहविडंबितः प्रतिभासमानमाबालमबाधितमेकमनेकाकारं वस्तु प्रत्यक्षविषयतयानादृत्य कथमप्यप्रतिभासमानं ब्रह्मतत्त्वमिव स्वलक्षणं तथा आचक्षीत ? अतिप्रसंगात् तथानुमानादागमाच्च भावस्यैकानेकरूपविशिष्टस्य प्रतीयमानत्वान्न "भावा येन निरूप्यंते तद्रूप नास्ति तत्त्वतः" इति वचनं निःप्रमाणकमेवोररीकार्यं, यतः स्वरूपवचनं सूत्रे मिथ्या स्यात् । यथा च प्रत्यक्षमनुमानमागमो वानेकातात्मकं वस्तु प्रकाशयति स्वनिर्णीताबाधं तथाग्रे प्रपचयिष्यते । किं च—

**निःशेषधर्मनैरात्म्यं स्वरूपं वस्तुनो यदि । तदा न निःस्वरूपत्वमन्यथा धर्मयुक्तता ॥ ९ ॥**

तत्त्वं सकलधर्मरहितत्वमकल्पनारोपितं प्रत्यक्षतः स्फुटमवभासमानं वस्तुनः स्वरूपमेव, तेन तस्य न निःस्वरूपत्वमितीष्टसिद्ध । कल्पनारोपितं तु तन्न वस्तुनः स्वरूपमाचक्ष्महे । न च कल्पितनिःशेषधर्मनैरात्म्यस्यात्मस्वरूपत्वे वस्तुनो निःशेषधर्मयुक्ततानिष्टा, कल्पितसकलधर्मयुक्तस्य तस्येष्टत्वात् । वस्तुकृताखिलधर्मसहितता तु न शक्यापादयितुं तया वस्तुनि कल्पितनिःशेषधर्मनैरात्म्यस्वरूपत्वस्याविनाभावात् तामंतरेणापि तस्योपपत्तेरिति केचित् । तेपि महामोहाभिभूतमनसः । स्वयं वस्तुभूतसकलधर्मात्मकतायाः स्वीकरणेपि तदसंभवाभिधानात् । कल्पिताखिलधर्मरहितत्वं हि वस्तुनः स्वरूपं ब्रुवाणेन वस्तुभूतसकलधर्मसहितता स्वीकृतैव तस्य तन्नांतरीयकत्वात् । कल्पनापोढं प्रत्यक्षमित्यत्र कल्पनाकाररहितत्वस्य वस्तुभूताकारनातरीयकत्वेन प्रत्यक्षे तद्वचनात्तत्सिद्धिवत् तथा कल्पनाकाररहितत्वस्य वचनाद्वस्तुभूताकारसिद्धिर्न प्रत्यक्षे स्वीकृतैवेति चेत्, तत्किमिदानीं सकलाकाररहितत्वमस्तु तस्य संविदाकारमात्रत्वात्तत्त्वतस्तथापि नेति चेत् कथं न वस्तुभूताकारसिद्धिः । न हि संविदाकारो वस्तुभूतो न भवति संविदद्वैतस्याप्यभावप्रसंगात् । ततः कल्पितत्वेन निःशेषधर्माणां नैरात्म्यं यदि वस्तुनः स्वरूपं तदा स्वरूपसंसिद्धिः यस्मादन्यथा वस्तुभूतत्वेनाखिलधर्मयुक्तता तस्य सिद्धेति व्याख्या प्रेयसी । अथवा

वस्तुभूतनिःशेषधर्माणां नैरात्म्यं वस्तुनो यदि स्वरूपं तदा तस्य स्वरूपसंसिद्धिस्तत्स्वरूपस्यानिराकरणात्। अन्यथा तस्य पररूपत्वप्रकारेण तु सैव वस्तुभूतधर्मयुक्तता वास्तवाखिलधर्माभावस्य वस्तुनः परभावे तादृशसकलधर्मासद्भावस्य स्वात्मभूतत्वप्रसिद्धेरन्यथा तदनुपपत्तेः। अथवा कल्पितानां वस्तुभूतानां च निःशेषधर्माणां नैरात्म्यं वस्तुनः स्वरूपं यदि तदा तस्य स्वरूपसंसिद्धिरन्यथा कल्पिताकल्पितसकलधर्मयुक्तता तस्येति व्याख्येयं सामान्येन निःशेषधर्मवचनात्। व्याघातश्चास्मिन् पक्षे नाशंकनीयः कल्पितानां वस्तुभूतानां च धर्माणां वस्तुनि यथाप्रमाणोपपन्नत्वात्। ततो यत्सकलधर्मरहितं तन्न वस्तु यथा पुरुषाद्यद्वैतं तथा च क्षणिकत्वलक्षणमिति जीवादिवस्तुनः स्वधर्मसिद्धिः सकलधर्मरहितेन धर्मेणानेकांतस्तस्य वस्तुत्वादिति चेन्न, वस्त्वंशत्वेन तस्य प्ररूपितत्वात् वस्तुत्वासिद्धेः। अन्यथा वस्त्वनवस्थानानुषंगात्। तदेवं सर्वथा वस्तुनि स्वरूपस्य निराकर्तुमशक्तेः सूक्तं निर्देश्यमानत्वमधिगम्यं ॥

**न कश्चित्कस्यचित्स्वामी संबंधाभावतोंजसा। पारतंत्र्यविहीनत्वात् सिद्धस्येत्यपरे विदुः १०**

संबंधो हि न तावदसिद्धयोः स्वस्वामिनोः शशाश्वविषाणवत्, नापि सिद्धासिद्धयोस्तत् वंध्यापुत्रवत्। सिद्धयोस्तु पारतंत्र्याभावादेवासंबंध एव अन्यथातिप्रसंगात्। केनचिद्रूपेण सिद्धस्यासिद्धस्य च पारतंत्र्ये सिद्धे परतंत्रसंबंध इत्यपि मिथ्या, पक्षद्वयभाविदोषानुषंगात्। न चैकस्य निष्पन्नानिष्पन्ने रूपे स्तः प्रतीघातात्। तन्न तत्त्वतः संबंधोस्तीति। तदुक्तं। "पारतंत्र्ये हि संबंधे सिद्धे का परतंत्रता। तस्मात्सर्वस्य भावस्य संबंधो नास्ति तत्त्वतः ॥" इति संबंधमात्राभावे च सिद्धे सति न कश्चित्कस्यचित्स्वामी नाम यतः स्वामित्वमर्थानामधिगम्यं स्यादित्येके ॥

**तथा स्याद्वादसंबंधो भावानां परमार्थतः। स्वातंत्र्यात् किं न देशादिनियमोद्भूतिरीक्ष्यते ११**

पारतंत्र्यस्याभावाद्भावाना संबंधाभावमभिदधानास्तेन संबंधं व्याप्तं कचित्प्रतिपद्यंते न वा? प्रतिपद्यंते चेत् कथं सर्वत्र सर्वदा संबंधाभावमभिदधुर्विरोधात्। नो चेत् कथमव्यापकाभावादव्याप्याभावसिद्धेः। परोपगमात् तस्य तेन व्याप्तिसिद्धेरदोष इति चेन्न, तथा स्वप्रतिपत्तेरभावानुषंगात्। परोपगमाद्धि परः प्रतिपादयितुं शक्यः। सर्वथा संबंधाभावान्नाशक्य एव प्रत्यक्षत इति चेन्न, तस्य स्वांशमात्रपर्यवसानात्। न कश्चित्केनचित्कथंचित्कदाचित्संबंध इतीयतो व्यापारात्कर्तुमसमर्थत्वादन्यथा सर्वज्ञत्वापत्तेः। सर्वार्थानां साक्षात्करणमंतरेण संबंधाभावस्य तेन प्रतिपत्तुमशक्तेः। केषांचिदर्थानां स्वातंत्र्यमसंबंधेन व्याप्तं सर्वोपसंहारेण प्रतिपद्य ततोन्येषामसंबंधप्रतिपत्तिरानुमानिकी स्यादितिचेत् तर्हि स्वातंत्र्यमर्थाना न तावदसिद्धाना, सिद्धाना तु स्वातंत्र्यात्संबंधाभावे तत्त्वतः किंन्न देशादिनियमेनोद्भवो दृश्यते तस्य पारतंत्र्येण व्याप्तत्वात्। न हि स्वतंत्रोर्थः सर्वनिरपेक्षतया नियतदेशकालद्रव्यभावजन्मास्ति न चाजन्मा सर्वथार्थक्रियासमर्थः स्वयं तस्याकारणात्। प्रत्यासत्तिविशेषाद्देशादिभिस्तन्नियतोत्पत्तिरर्थस्य स्यादिति चेत्, स एव प्रत्यासत्तिविशेषः संबंधः पारमार्थिकः सिद्ध इत्याह;—

**द्रव्यतः क्षेत्रतः कालभावाभ्यां कस्यचित्स्वतः। प्रत्यासन्नकृतः सिद्धः संबंधः केनचित्स्फुटः १२**

कस्यचित्पर्यायस्य स्वतः केनचित्पर्यायेण सहैकत्र द्रव्ये समवायाद्द्रव्यप्रत्यासत्तिर्यथा स्मरणस्यानुभवेन सहात्मन्येकत्र समवायस्तमंतरेण तत्रैव यथानुभवस्मरणानुपपत्तेः सोममित्रानुभवाद्विष्णुमित्रस्मरणानुपपत्तिवत्। संतानैकत्वादुपपत्तिरिति चेन्न, संतानस्यावस्तुत्वेन तन्नियमहेतुत्वाघटनात्। वस्तुत्वे वा नाममात्रं भिद्येत सतां नो द्रव्यमिति। तथैकसंतानाश्रयत्वमेव द्रव्याद्रव्याश्रयत्वं चेति न कश्चिद्विशेषः यत्संतानो वासनाप्रबोधस्तत्संतानं स्मरणमिति नियमोपगमोपि न श्रेयान्, प्रोक्तदोषानतिक्रमात्। संतानस्यात्म-

द्रव्यत्वोपपत्तौ यदात्मद्रव्यपरिणामो वासनाप्रबोधस्तदात्मद्रव्यविवर्तः स्मरणमिति परमतसिद्धेः । कथं परस्परभिन्नस्वभावकालयोरेकमात्मद्रव्य व्यापकमिति च न चोद्य, सकृन्नानाकारव्यापिना ज्ञानेनैकेन प्रतिविहितत्वात् । समसमयवर्तिनो रसरूपयोरेकगुणिव्याप्तयोरनुमानानुमेयव्यवहारयोरेकद्रव्यप्रत्यासत्तिर-नेनोक्ता तदभावे तयोस्तद्व्यवहारयोग्यतानुपपत्तेः । एकसामग्र्यधीनत्वात्तदुपपत्तिरिति चेत् कथमेका सामग्री नाम ? एकं कारणमिति चेत्, तत्सहकार्युपादानं वा ? सहकारि चेत् कुलालकलशयोर्दण्डादि-रेका सामग्री स्यात् समानक्षणयोस्तयोरुत्पत्तौ तस्य सहकारित्वात् । तथा एतयोरनुमानानुमेयव्यवहार-योग्यता अव्यभिचारिणी स्यात् तदेकसामग्र्यधीनत्वात् । एकसमुदायवर्तिसहकारिकारणमेका सामग्री न भिन्नसमुदायवर्ति यतोयमतिप्रसग इति चेत्, कः पुनरयमेकः समुदायः ? साधारणार्थक्रियानियता प्रविभागरहिता रूपादय इति चेत् कथं प्रविभागरहितत्वमेकत्वपरिणामाभावे तेषामुपपद्यतेतिप्रसगात् । सांवृत्यैकत्वपरिणामेनेति चेन्न, तस्य प्रविभागाभावहेतुत्वायोगात् । प्रविभागाभावोपि तेषां सावृत इति चेन्न हि तत्त्वतः प्रविभक्ता एव रूपादयः समुदाय इत्यापन्न । न चैव केषाचित्समुदायेतरव्यवस्था साधारणार्थक्रियानियतत्वेतराभ्या मोपपन्नेति वा युक्तं, सूर्याबुजयोरपि समुदायप्रसगात् । तयोरंबुज-प्रबोधरव्योः साधारणार्थक्रियानियतत्वात् । ततो वास्तवमेव प्रविभागरहितसमुदायविशेषस्तेषामेकत्वा-ध्यवसायहेतुरंगीकर्तव्यः । स चैकत्वपरिणाम तात्त्विकमतरेण न घटत इति सोपि प्रतिपत्तव्य एव, स चैकं द्रव्यमिति सिद्धं । स्वगुणपर्यायाणां समुदायस्कंध इति वचनात् । तथासति रसरूपयोरेकार्थात्म-कयोरेकद्रव्यप्रत्यासत्तिरेव लिंगलिंगिव्यवहारहेतुः कार्यकारणभावस्यापि नियतस्य तदभावेनुपपत्तेः सतानातरवत् । न हि कश्चित्पूर्वे रसादिपर्यायाः पररसादिपर्यायाणामुपादानं नान्यत्र द्रव्ये वर्तमाना इति नियमस्तेषामेकद्रव्यतादात्म्यविरहे कथंचिदुपपन्नः । एकमुपादानमेका सामग्रीति द्वितीयोपि पक्षः सौगतानामसभाव्य एव. नानाकार्यस्यैकोपादानत्वविरोधात् । यदि पुनरेक द्रव्यमनेककार्योपादानं भवेत्तदा सैवेकद्रव्यप्रत्यासत्तिरायाता । रसरूपयोः क्षेत्रप्रत्यासत्तिर्यथा बलाकासलिलयोरेकस्या भूमौ-स्थितयोः सयुक्तसयोगो हि ततो नान्यः प्रतिष्ठामियर्ति । जन्यजनकभाव एव तयोः परस्परं प्रत्यासत्ति-रितिचेन्न, अन्यतरसमुद्भूतायाः परत्र सरसि बलाकाया निवाससभवात् । नैका बलाका पूर्वं सरः प्रविहाय सरोंतरमधितिष्ठंती काचिदस्ति प्रतिक्षणं तद्भेदादितिचेन्न, कथंचित्तदक्षणिकत्वस्य प्रतीतेर्बाध-काभावात्तद्भातत्वानुपपत्तेः । क्षितेः प्रतिप्रदेशं भेदादेकत्र प्रदेशे बलाकासलिलयोरनवस्थानान्नैव तत्क्षेत्रप्रत्यासत्तिरितिचेन्न, क्षित्याद्यवयविनस्तदाधारस्यैकस्य साधनात् । न चैकस्यावयविनो नानावयव-व्यापिनः सकृदसभवः प्रतीतिसिद्धत्वाद्वेद्याद्याकारव्याप्येकज्ञानवत । कालप्रत्यासत्तिर्यथा सहचरयोः सम्यग्दर्शनज्ञानसामान्ययोः शरीरे जीवस्पर्शविशेषयोर्वा पूर्वोत्तरयोर्भरणिकृत्तिकयो. कृत्तिकारोहिण्योर्वा तयोः प्रत्यासत्त्यंतरस्याव्यवस्थानात् । भावप्रत्यासत्तिर्यथा गोगवययोः केवलिसिद्धयोर्वा तयोरेकतरस्य *हि यादृग्भावः सस्थानादिरनंतज्ञानादिर्वा तादृक्तदन्यतरस्य सुप्रतीत* इति न प्रत्यासत्त्यतरं कयोश्चिदनेक-प्रत्यासत्तिसबंधे वा न किंचिदनिष्टं प्रतिनियतोद्भूतेः सर्वपदार्थाना द्रव्यादिप्रत्यासत्तिचतुष्टयव्यतिरेकेणा-नुपपद्यमानत्वेन प्रसिद्धेः । सैव चतुर्विधा प्रत्यासत्तिः स्फुटः सबधो बाधकाभावादिति न सबधाभावो व्यवतिष्ठते । ननु च द्रव्यप्रत्यासत्तिरेकेन द्रव्येण कयोश्चित्पर्याययोः क्रमभुवोः सहभुवोर्वा तादात्म्यं तच्च रूपश्लेषः स च द्वित्वे सति संबंधिनोरयुक्त एव विरोधात् तयोरैक्येपि न सबंधः सबंधिनोरभावे तस्याघटनात् द्विष्ठत्वादन्यथातिप्रसगात् । नैरंतर्यं तयो रूपश्लेषः इत्यप्ययुक्तं, तस्यातराभावरूपत्वे तात्त्विकत्वायोगात् प्राप्तिरूपत्वेपि प्राप्तेः । परमार्थतः कार्त्स्न्यैकदेशाभ्यामसंभवाद्गत्यंतराभावात् । कल्पि-

तस्य तु रूपश्लेषस्याप्रतिषेधात् न स तात्त्विकः संबंधोस्ति प्रकृतिभिन्नानां स्वस्वभावव्यवस्थितेः अन्यथा सांतरत्वस्य संबंधप्रसंगादिति केचित् । तदुक्तं । "रूपश्लेषो हि संबंधो द्वित्वे स च कथं भवेत् । तस्मात् प्रकृतिभिन्नानां संबंधो नास्ति तत्त्वतः ॥" इति । तदेतदेकांतवादिनश्चोद्यं न पुनः स्याद्वादिनां । ते हि कथंचिदेकत्वापत्तिं संबंधिनो रूपश्लेषं संबंधमाचक्षते । न च सा द्वित्वविरोधिनी कथंचित्स्वभाव-नैरंतर्यं वा तदपि नांतराभावरूपमस्तित्वं छिद्रमध्यविरहेष्वन्यतमस्यांतरस्याभावो हि तत्स्वभावांतरात्मको वस्तुभूत एव यदा रूपश्लेषः कयोश्चिदास्थीयते निर्बाधं तथा प्रत्ययविषयस्तदा कथं कल्पनारोपितः स्यात् । केनचिदंशेन तादात्म्यमतादात्म्यं च संबंधिनोर्विरुद्धमित्यपि न मंतव्यं तथानुभवाच्चित्राकारसंवेदन-वत् । एतेन प्राप्त्यादिरूपं नैरंतर्यं रूपश्लेष इत्यपि स्वीकृतं तस्यापि कथंचित्तादात्म्यानतिक्रमात् । ततः स्वस्वभावव्यवस्थितेः प्रकृतिभिन्नानामर्थानां न संबंधस्तात्त्विक इत्ययुक्तं तत एव तेषां संबंधसिद्धेः । स्वस्व-भावो हि भावानां प्रतीयमानः कथंचित्प्रत्यासत्तिविप्रकर्षश्च सर्वथा तदप्रतीतेस्तेन चावस्थितिः कथं संबंधाभावैकांतं साधयेत् संबंधैकांतवत् । न चापेक्षत्वात् संबंधस्वभावस्य मिथ्याप्रतिभासः सूक्ष्मत्वादि-वदसंबंधस्वभावस्यापि तथानुषंगात् । स चासंबंधस्वभावोऽनापेक्षिकः कथंचिदर्थमपेक्ष्य कस्यचित्तद्व्यवस्थि-तेरन्यथानुपपत्तेः । स्थूलत्वादिवत् प्रत्यक्षबुद्धौ प्रतिभासमानो अनापेक्षिक एव तत्पृष्ठभाविना तु विकल्पे-नाध्यवसीयमानो यथापेक्षिकस्तथा वास्तवो भवतीतिचेत्, संबंधस्वभावोपि समानं । न हि स प्रत्यक्षेन प्रतिभासते यतोऽनापेक्षिको न स्यात् । ननु च परापेक्षैव संबंधस्तस्य तन्निष्ठत्वात् तदभावे सर्वथाप्य-संभवात् । परापेक्षमाणो भावः स्वयमसत्त्वादपेक्षते स तथा न तावदसन्नपेक्षो धर्माश्रयत्वविरोधात् खरशृंगवत् । नापि सन् सर्वनिराशंसत्वादन्यथा सत्त्वविरोधात् कथंचित्सन्नसन्नापेक्ष्य इत्ययमपि पक्षो न श्रेयान् पक्षद्वयदोषानतिक्रमात् । न चैकोर्थः सन्नसंश्च केनचिद्रूपेण सभवति विरोधादन्यथातीतानाग-ताद्यशेषात्मको वर्तमानार्थः स्यादिति न क्वचित्सदसत्त्वव्यवस्था, सकरव्यतिकरापत्तेः । ततोपरापेक्षा-णामसन्निबंधनः संबंधः सिध्येत् । तदुक्तं । "परापेक्षादिसंबधः सोसत्कथमपेक्षते । संश्च सर्वनिराशंसो भावः कथमपेक्ष्यते ॥" इति कश्चित् । सोपि सर्वथा सदसत्त्वाभ्यां भावस्य परापेक्षाया विरोधमप्रतिपद्यमानः कथं तां प्रतिषेध्यात् । प्रतिपद्यमानस्तु स्वयं प्रतिषेद्धुमसमर्थस्तस्याः क्वचि-त्सिद्धेरन्यथा विरोधायोगात् कथं चानिराकुर्वन्नपि परापेक्षा सर्वत्र संबंधस्यानापेक्षिकत्वं प्रत्याचक्षीत ? न चेदुन्मत्तः । स्वलक्षणमेव संबंधोऽनापेक्षिकः स्यान्न ततोऽन्यः । स चेष्टो नाममात्रे विवादाद्वस्तुन्य-विवादादितिचेत् । कः पुनः संबंधमस्वलक्षणमाहतस्यापि स्वेन रूपेण लक्ष्यमाणस्य स्वलक्षणत्वात् । ननु कुतः संबंधस्तथा द्वयोः सबंधिनोः सिद्धः ? एकेन गुणाख्येन संयोगेनान्येन वा धर्मेणांतरस्थितेनावाच्येन वा वस्तुरूपेण संबंधादितिचेत्, स तत्संबंधिनोरनर्थांतरमर्थांतरं वा ? यद्यनर्थांतरं तदा संबंधिनावेव प्रसज्येते । तथा च न सबंधो नाम । स ततोर्थांतरं चेत् संबंधिनौ केवलौ कथं सबंधौ स्यातां तत्त्वान्य-त्वाभ्यामवाच्यश्चेत् कथं वस्तुभूतः स्यात् । भवतु चार्थांतरमनर्थांतरं वा सबंधः । स तु द्वयोरेकेन कुतः स्यात् । परेणैकेन सबंधादिति चेत् तेनापि न सबधः । परेणैकेन संबंधादित्यनवस्थानात् संबंध-मतिः सुदूरमपि गत्वा द्वयोरेकाभिसंबंधमंतरेणापि सबंधत्वेन ···(?) अभिसंबंधत्वमतिः केवलयोः संबंधिनोरतिप्रसंगात् । यदि संबंधश्च स्वेनासाधारणेन रूपेण स्थितस्तदा सिद्धममिश्रणमर्थानां परमार्थतः । तदुक्तं । "द्वयोरेकाभिसबंधात् संबंधो यदि तद्वयोः । कः संबंधोऽनवस्था च न संबंधमतिस्तथा ॥" "तौ च भावौ तदन्यश्च सर्वे ते स्वात्मनि स्थिताः । इत्यमिश्राः स्वयं भावास्तन्मिश्रयति कल्पना ॥" इति कथं संबंधः स्वलक्षणमिष्यते संबंधिनोरर्थांतरं ततोऽनर्थांतरस्य तु तथेष्टौ न वस्तुव्यतिरेकेण

संबंधोन्यत्र कल्पनामात्रादिति वदन्नपि न स्याद्वादिमतमवबुध्यते । तद्विभेदाभेदैकांतपराङ्मुखं न तद्दोषास्पदं । येन रूपेण लक्ष्यमाणः संबंधो अन्यो वार्थः स्वलक्षणमिति तु परस्परापेक्षभेदाभेदात्मकं जात्यंतरमेवोक्तं तस्याबाधितप्रतीतिसिद्धत्वेन स्वलक्षणव्यपदेशात् । ततो न कल्पनामेवानुरुंधानैः प्रतिपत्तृभिः क्रियाकारकवाचिनः शब्दाः संयोज्यतेऽन्यापोहप्रतीत्यर्थमेवेति घटते येनेदं शोभेत । "तामेव चानुरुंधानैः क्रियाकारकवाचिन. । भावभेदप्रतीत्यर्थं सयोज्यंतेऽभिधायिकाः ॥" इति क्रियाकारकादीना सबधिनतत्संबंधस्य च वस्तुरूपप्रतीतये तदभिधायिकाना प्रयोगसिद्धेः सर्वत्रान्यापोहस्यैव शब्दार्थत्वनिराकरणाच्च । ततः कश्चित्कस्यचित्स्वामी संबंधात्सिध्यत्येवेति स्वामित्वमर्थानामधिगम्यं निर्देश्यत्ववदुपपन्नमेव ॥

**न किंचित्केनचिद्वस्तु साध्यते सन्न चाप्यसत् । ततो न साधनं नामेत्यन्ये तेप्यसदुक्तयः १३**

साधनं हि कारण तच्च न सदेव कार्यं साधयति स्वरूपवत्, नाप्यसत्खरविषाणवत् । प्रागसत्साधय'तीति न वा युक्तं, सदेव साधयतीति पक्षानतिक्रमात् । न ह्युत्पत्तेः प्रागसत् प्रागेव कारणं निष्पादयति, तस्यासत एव निष्पादनप्रसक्तेः । उत्पत्तिकाले सदेव करोतीति तु कथनेन कथं न सत्पक्षः । कथंचित्सद् करोतीत्यपि न व्यवतिष्ठते. येन रूपेण सत्तेन करणायोगादन्यथा स्वात्मनोपि करणप्रसंगात् । येन चात्मना तदसत्तेनापि न कार्यतामियर्ति शशविषाणवदित्युभयदोषाषकाशात । सदसद्रूपं कार्यं नाऽनाकुल, न च कथचिदपि कार्यमसाधयत् किंचित्साधनं नाम कार्यकरणभावस्य तत्त्वतोसंभवाच्च । तदुक्त । "कार्यकारणभावोपि तयोरसहभावतः । प्रसिद्ध्यति कथं द्विष्ठोऽद्विष्ठे सबधता कथं ॥" "क्रमेण भाव एकत्र वर्तमानोन्यनिस्पृहः । तदभावेपि भावाच्च सबधो नैकवृत्तिमान् ॥" "यद्यपेक्ष्य तयोरेकमन्यत्रासौ प्रवर्तते । उपकारी ह्यपेक्षः स्यात कथं चोपकरोत्यसत ॥" "यद्येकार्थाभिसबंधात्कार्यकारणता तयोः । प्राप्ता द्वित्वादिसबंधात् सव्येतरविषाणयोः ॥" "द्विष्ठो हि कश्चित्संबंधो नातोन्यत्तस्य लक्षणं । भावाभावोपधियोंग. कार्यकारणता यदि ॥" योगोपाधी न तावेव कार्यकारणतात्र किं । भेदाच्चेन्न त्वयं शब्दो नियोक्तारं समाश्रितः ॥" "पश्यन्नेकमदृष्टस्य दर्शने तददर्शने । अपश्यत्कार्यमन्वेति विनाप्याख्यातृभिर्जनः ॥" "दर्शनादर्शने मुक्त्वा कार्यबुद्धेरसंभवात् । कार्यादिश्रुतिरप्यत्र लाघवार्थं निवेशिता ॥' "तद्भावभावात्तत्कार्यगतिर्यस्य तु वर्तते । सकेतविषयाख्या सा सास्नादेर्गोगतिर्यथा ॥" "भावे भाविनि तद्भावो भाव एव च भाविता । प्रसिद्धे हेतुफलते प्रत्यक्षानुपलंभतः ॥" "एतावन्मात्रतत्त्वार्थाः कार्यकारणगोचराः । विकल्पा दर्शयंत्यर्थान् मिथ्यार्थान् घटितानिव ॥" "भिन्ने का घटनाऽभिन्ने कार्यकारणतापि का । भावे वान्यस्य विश्लिष्टौ श्लिष्टौ स्याता कथं न तौ ॥" इति । तदेतदसद्दूषणं । स्वाभिमतेप्यकार्यकारणभावे समानत्वात । तथाहि । अकार्यकारणभावोद्विष्ठ एव कथमसहभाविनोः कार्यकारणत्वाभ्या निषेध्ययोरर्थयोर्वर्तते । न वा द्विष्ठोसौ संबंधाभावत्वविरोधात । पूर्वत्र भावे वर्तित्वा परत्र क्रमेण वर्तमानोपि यदि सोन्यनिस्पृह एवैकत्र तिष्ठत्कथमसंबंधः ? परस्य ह्यनुत्पन्नस्याभावेपि पूर्वत्र वर्तमानः पूर्वस्य च नष्टत्वेनाभावेपि परत्र वर्तमानोसावेकवृत्तिरेव स्यात् । पूर्वत्र वर्तमानः परमपेक्षते परत्र च तिष्ठत्पूर्वमतो संबधो द्विष्ठ एवान्यनिस्पृहत्वाभावादिति चेत् कथमनुपकारं तथोत्तरमपेक्ष्यतेति प्रसगात् । सोपकारकमपेक्षत इति चेत् नासतस्तदोपकारकत्वायोगात । यदि पुनरेकेनाभिसंबंधात्पूर्वपरयोरकार्यकारणभावस्तदा सव्येतरविषाणयोः स स्यादेकेन द्वित्वादिनाभिसंबंधात् । तथा च सिद्धसाध्यता । द्विष्ठो हि कश्चिदसबंधो नातोन्यत्तस्य लक्षणं येनाभिमतसिद्धिः । यदि पुनः पूर्वस्याभाव एव यो भावोऽभावेऽभावस्तदुपधियोगोकार्यकारणभावस्तदा तावेव भावाभावयोगोपाधी किं नोऽकार्य-

कारणभावः स्यात् तयोर्भेदादिति चेत्, शब्दस्य नियोक्तृसमाश्रितत्वेन भेदेप्यभेदवाचिनः प्रयोगाभ्युपगमात्। स्वयं हि लोकोयमेकमदृष्टस्य दर्शनेप्यपश्यंस्तददर्शने च पश्यद्भिनाप्याख्यातृभिरकार्यमवबुध्यते। न च तथा दर्शनादर्शने मुक्त्वा क्वचिदकार्यबुद्धिरस्ति। न च तयोरकार्यादिश्रुतिर्विरुध्यते लाघवार्थत्वात् तन्निवेशस्य। या पुनरतद्भावाभावादकार्यगतिरुपवर्ण्यते सा संकेतविषयाख्या, यथा असास्नादेरगोगतिः। नैतावता तत्त्वतोकार्यकारणभावो नाम। भावे हि अभाविनी वा भाविता अहेतुफलते प्रसिद्धे। प्रसिद्धे प्रत्यक्षानुपलंभाभ्यामेव। तदेतावन्मात्रतत्त्वार्था एवाकार्यकारणगोचरा विकल्पा दर्शयंत्यर्थान् मिथ्यार्थात्स्वयमघटितानपीति समायातं। भिन्ने हि भावे का नामाघटना तत्कान्यावभासते? येनासौ तात्त्विकी स्यात्। अभिन्ने सुतरां नाघटना। न च भिन्नावर्थौ केनचिदकार्यकारणभावेन योगादकार्यकारणभूतौ स्यातां संबंधविधिप्रसंगात्। तदेवं न तात्त्विकोऽर्थो नाम कार्यकारणभावो व्यवतिष्ठतेऽकार्यकारणभाववत्। स्वस्वभावव्यवस्थितार्थान् विहाय नान्यः कश्चिदकार्यकारणभावोस्त्विति। तथा व्यवहारस्तु कल्पनामात्रनिर्मित एव कार्यकारणव्यवहारवदितिचेत् तर्हि वास्तव एव कार्यकारणभावोऽकार्यकारणभाववत्। केवलं तद्व्यवहारो विकल्पशब्दलक्षणो विकल्पनिर्मित इति किमनिष्टं। वस्तुरूपयोरपि कार्यकारणभावे तयोरभावो वस्तुत्वेति न तु युक्तं, व्याघातात् क्वचिन्नीलेतरत्वाभाववत्। ततो यदि कुतश्चित्प्रमाणात् कार्यकारणभावः परमार्थतः केषाचिदर्थाना सिध्येत तदा तत एव कार्यकारणभावोपि प्रतीतेरविशेषात्तथैव हि गवादीनामसाध्यसाधनभावः परस्परमतद्भावभावित्वप्रतीतेर्व्यवतिष्ठते। तथाग्निधूमादीनां साध्यसाधनभावोपि तद्भावभावित्वप्रतीतेर्बाधकाभावात्। नन्वकस्मादग्निं धूमं वा केवलं पश्यतः कारणत्वं कार्यत्वं वा किं न प्रतिभातीतिचेत् किं पुनरकारणत्वमकार्यत्वं वा प्रतिभाति। सातिशयसंविदां प्रतिभात्येवेति चेत्, कारणत्वं कार्यत्वं वा तत्र तेषां न प्रतिभातीति कोशपानं विधेयं। अस्मदादीनां तु तदप्रतिभासनं तथा निश्चयानुपपत्तेः क्षणक्षयादिवत्। तथोभयत्र समानं। यथैव हि तद्भावभावित्वानध्यवसायिनां न क्वचित्कार्यत्वकारणत्वनिश्चयोस्ति तथा स्वयमतद्भावभावित्वव्यवसायिनामकार्यकारणत्वनिश्चयोपि प्रतिनियतसामग्रीसापेक्षकत्वाद्वस्तुधर्मनिश्चयस्य। न हि सर्वत्र समानसामग्रीप्रभावो निर्णयस्तस्यांतरंगबहिरंगसामग्रीवैचित्र्यदर्शनात्। धूमादिज्ञानसामग्रीमात्रात्तत्कार्यत्वादिनिश्चयानुत्पत्तेः न कार्यत्वादि धूमादिस्वरूपमिति चेत् तर्हि क्षणिकत्वादिरपि तत्स्वरूपं माभूत्तत एव क्षणिकत्वाभावे वस्तुत्वमेव न स्यादिति चेत् कार्यत्वकारणत्वाभावेपि कुतो वस्तुत्वं खरशृंगवत्। सर्वथाप्यकार्यकारणस्य वस्तुत्वानुपपत्तेः कूटस्थवत्। क्षणिकैकांतवद्वा विशेषासंभवात्। ननु च सदपि कार्यत्वं कारणत्वं वा वस्तुत्वस्वरूपं न संबंधोऽद्विष्ठत्वात्। कार्यत्वं कारणे हि न वर्तते कारणत्वं वा कार्ये येन द्विष्ठं भवेत्। कार्यकारणभावस्तयोरेको वर्तमानः संबंध इति चेन्न, तस्य कार्यकारणाभ्यां भिन्नस्याप्रतीतेः। सत्तोपि प्रत्येकपरिसमाप्त्या तत्र वृत्तौ तस्यानेकत्वापत्तेः। एकदेशेन वृत्तौ सावयवत्वानुषक्तेः स्वावयवेष्वपि वृत्तौ प्रकृतपर्यनुयोगस्य तदवस्थत्वादनवस्थानावतारात्। कार्यकारणांतराले तस्योपलंभप्रसंगाच्च ताभ्यां तस्याभेदेपि कथमेकत्वं भिन्नाभ्यामभिन्नस्याभिन्नत्वविरोधात्। स्वयमभिन्नस्यापि भिन्नार्थैस्तादात्म्ये परमाणोरेकस्य सकलार्थैस्तादात्म्यप्रसंगादेकपरमाणुमात्रं जगत्स्यात् सकलजगत्स्वरूपो वा परमाणुरिति भेदाभेदैकांतवादिनोरुपलंभः स्याद्वादिनस्तथानभ्युपगमात्। कार्यकारणभावस्य हि संबंधस्याबाधिततथाविधप्रत्ययारूढस्य स्वसंबंधिनो वृत्तिः कथंचित्तादात्म्यमेवानेकांतवादिनोच्यते। स्वाकारेषु ज्ञानवृत्तिवत् कुतोनेकसंबंधितादात्म्ये कार्यकारणभावस्य संबंधस्यैकत्वं न विरुध्यते इति चेत्, नानाकारतादात्म्ये ज्ञानस्यैकत्वं कुतो न विरुध्यते? तदशक्यविवेचनत्वादिति चेत् तत एवान्यत्रापि कार्यकारण-

योर्हि द्रव्यरूपतयैकत्वात् कार्यकारणभावस्यैकत्वमुच्यते न च तस्य शब्दे विवेचनत्वं मृद्द्रव्यात् कुशूल-घटयोर्हेतुफलभावेनोपगतयोर्द्रव्यांतरं नेतुमशक्तेः । क्रमभुवोः पर्याययोरेकद्रव्यप्रत्यासत्तेरुपादानोपादेयत्वस्य वचनात् । न चैवंविधः कार्यकारणभावः सिद्धांतविरुद्धः। सहकारिकारणेन कार्यस्य कथं तत् स्यादेकद्रव्यप्रत्यासत्तेरभावादिति चेत् कालप्रत्यासत्तिविशेषात् तत्सिद्धिः । यदनंतरं हि यदवश्यं भवति तत्तस्य सहकारिकारणमितरत्कार्यमिति प्रतीत । न चेदं सहकारित्वं कचिद्भावप्रत्यासत्तिः क्षेत्रप्रत्यासत्तिर्वा नियमाभावात् । निकटदेशस्यापि चक्षुषो रूपज्ञानोत्पत्तौ सहकारित्वदर्शनात् । संदंशकादेश्चामुवर्णस्वभावस्य सौवर्णकटकोत्पत्तौ यदि पुनर्यावत्क्षेत्रं यद्यस्योत्पत्तौ सहकारि दृष्टं यथाभाव च तत्तावत्क्षेत्रं तथाभावमेव सर्वत्रेति नियता क्षेत्रभावप्रत्यासत्तिः सहकारित्वं कार्ये निगद्यते तदा न दोषो विरोधाभावात् । तदेव व्यवहारनयसमाश्रयणे कार्यकारणभावो द्विष्ठः सबंधः सयोगसमवायादिवत्प्रतीतिसिद्धत्वात् पारमार्थिक एव न पुनः कल्पनारोपितः सर्वथाप्यनवद्यत्वात् । सग्रहर्जुसूत्रनयाश्रयणे तु न कस्यचित्कश्चित्संबंधोन्यत्र कल्पनामात्रात् इति सर्वमविरुद्ध । न चात्र साध्यसाधनभावस्य व्यवहारनयादाश्रयणे कथचिदसभव इति सक्तं साधनत्वमधिगम्यमर्थाना तदपलपंतोऽस्मदुक्तय एव इत्याह;—

**मोक्षादिसाधनाभ्यामाभावामक्तेस्तदर्थिनाम् । तत्राविद्याविलासेष्टौ क मुक्तिः पारमार्थिकी १४**
**संविचेन्संविदेवेत्यदोषः मा यद्यसाधना । नित्या स्यादन्यथा सिद्धं साधनं परमार्थतः ॥१५॥**
**नित्यसर्वगतेष्विष्टौ तस्याः संविच्यसंभवात् । क व्यवस्थापनानंशक्षणिकज्ञानतत्त्ववत् ॥ १६ ॥**

न हि क्षणिकानंशसंवेदनं स्वत प्रतिभासते सर्वस्य भ्रांत्यभावानुषंगात् । तद्वन्नित्य सर्वगतं ब्रह्मेति न तत्संवेदनमेव मुक्तिः पारमार्थिकी युक्ता, ततः सकलकर्मविप्रमोक्षो मुक्तिरुरीकर्तव्या । सा बंधपूर्विकेति तात्त्विको बधोऽभ्युपगंतव्य तयोः ससाधनत्वात् । अन्यथा कादाचित्कत्वायोगात्साधनं तात्त्विकमभ्युपगंतव्यं न पुनरविद्याविलासमात्रमिति सूक्त साधनमधिगम्यम् ॥

**आधाराधेयभावस्य पदार्थानामयोगतः । तत्त्वतो विद्यते नाधिकरणं किंचिदित्यसत् ॥ १७॥**
**स्फुटं द्रव्यगुणादीनामाधाराधेयतागतेः । प्रसिद्धिबाधितत्वेन तदभावस्य सर्वथा ॥ १८ ॥**

न हि द्रव्यमप्रसिद्ध गुणादयो वा प्रत्यभिज्ञानादिप्रत्ययेनाबाधितेन तन्निरूपणात् । नाप्याधाराधेयता द्रव्यगुणादीनामप्रसिद्धा यतः सर्वथाधिकरणमसदिति पक्षः प्रसिद्धिबाधितो न स्यात् । हेतुश्चासिद्धः पदार्थानामाधाराधेयभावस्य विचार्यमाणस्यायोगादिति । स्थाल्यां दधि पटे रूपमिति तत्प्रत्ययस्य निर्बाधस्य तत्साधनत्वात् कार्यकारणभावविशेषस्य साधकोयं प्रत्यय इति चेत् स एवाधाराधेयभावोस्तु । सांवृतोसाविति चेत् न, कार्यकारणभावस्य तात्त्विकस्य साधितत्वात् । तद्विशेषस्य तात्त्विकत्वसिद्धेः । कथं तर्हि गुणादीनां द्रव्याधारत्वे द्रव्यस्याप्यन्याधारत्वं न स्याद्यतोऽनवस्था निवार्येत । तेषां वा द्रव्यानाधारत्वप्रसक्तिरिति चेत्—

**नानवस्थाप्रसंगोत्र व्योम्नः स्वाश्रयतास्थितेः । सर्वलोकाश्रयस्यांतविहीनस्य समंततः ॥ १९ ॥**

स्वाश्रय व्योम, समततोंतविहीनत्वान्यथानुपपत्तेः। समंततोंतविहीनं तत् सकलासर्वगतार्थाभावस्वभावत्वे सत्येकद्रव्यरूपत्वात् । रूपादिपरमाणूनां रसादिपरमाणुभावरूपत्वादविरोध इति चेत् ते तर्हि रूपरसादिपरमाणवः सर्वे सकृत्परस्परं संसृष्टा व्यवहिता वा स्युः ? न तावत्संसृष्टाः कार्त्स्न्येनैकदेशेन वा संसर्गस्य स्वयं निराकरणात् । व्यवहितत्वे तु तेषामनंतानामनंतप्रदेशं व्यवधायकं किंचिदुरीकर्तव्यं तदेव व्योम तेषामभावे । इति सिद्धं सकलासर्वगतार्थाभावस्वभावत्वं व्योम्नः । न च तस्यानंताः प्रदेशाः

परस्परमेकशो व्यवहिता यतस्तद्व्यवधायकांतरकल्पनायामनवस्था कथंचिदेकद्रव्यतादात्म्येनाव्यवहितत्वात् अन्यथा तदव्यवधानायोगात् । भवितव्यं वा व्यवधानेन तेषां प्रसिद्धसत्त्वानां व्यवधानेनवस्थानात् । येन चैकेन द्रव्येण तेषां कथंचित्तादात्म्यं ततो व्योमेति तस्यैकद्रव्यत्वसिद्धिरिति नासिद्धं व्योम्नो गतत्त्व-साधनं । ततस्तदनंतं सर्वलोकाधिकरणमिति नानवस्था तदाधारान्तरानुपपत्तेः ॥

**व्योमवत्सर्वभावानां स्वप्रतिष्ठानुषंजनं । कर्तुं नैकांततो युक्तं सर्वगत्वानुषंगवत् ॥ २० ॥**

निश्चयनयात्सर्वे भावाः स्वप्रतिष्ठा इति युक्तं न पुनः सर्वथा व्योमवत्तेषां सर्वगतत्वामूर्तत्वादिप्रसंग-स्यापि दुर्निवारत्वात् । सर्वद्रव्याणां सर्वगतत्वे को दोष इति चेत् प्रतीतिविरोध एवामूर्तत्वादिति वक्ष्यामः । प्रतीत्यतिक्रमे तु कारणाभावात्सर्वमसमंजसं मानमेयं प्रलापमात्रमुपेक्षणीयं स्यादिति यथा-प्रतीतिसिद्धमधिकरणमधिगम्यमर्थानाम् ॥

**अस्थिरत्वात्पदार्थानां स्थितिर्नैवास्ति तात्त्विकी । क्षणादूर्ध्वमितीच्छंति केचित्तदपि दुर्घटम् २१**
**निरन्वयक्षयैकांते संतानाद्यनवस्थितेः । पुण्यपापाद्यनुष्ठानाभावासक्तेर्निरूपणात् ॥ २२ ॥**

संवृत्या सतानसमुदायसाधर्म्यात् प्रेत्यभावाना पुण्यपापमुक्तिमार्गानुष्ठानस्य चाभ्युपगमात् परमार्थ-तस्तदभावासक्तिर्नानिष्टेति चेत्, किमिदानीं संवेदनाद्वैतमस्तु परमार्थ सत् निरन्वयविनश्वराणामेकक्षण-स्थितीनां नानापदार्थानामनुभवात् । तदपि नेति चेत् तर्हि इष्टं सतानादि सर्वं निरंकुशत्वात् तच्च निरन्व-यक्षयैकांते संवृत्त्यापि न स्यात् । तथा च निरूपितं "सतानः समुदायश्च साधर्म्यं च निरंकुशः । प्रेत्य-भावश्च तत्सर्वं न स्यादेकत्वनिह्नवे ॥" इति । ननु च बीजांकुरादीनामेकत्वाभावेपि संतानः सिद्धस्ति-लादीनां समुदायसाधर्म्यं च तद्वत्सर्वत्र तत्सिद्धौ किमेकत्वेनेति चेन्न, सर्वबीजांकुरादीनामेकसंतान-त्वापत्तेः, सकलतिलादीनां वा समुदायसाधर्म्यप्रसक्तेः । प्रत्यासत्तेर्विशेषात्केषांचिदेव संतानः समुदायः साधर्म्यं च विशिष्टमिति चेत्, स कोन्योऽन्यत्रैकद्रव्यक्षेत्रभावप्रत्यासत्तेरिति नान्वयनिह्नवो युक्तः । न ह्यव्यभिचारी कार्यकारणभावः संताननियमहेतुः, सुगतेतरचित्तानामेकसतानत्वप्रसगादिति समर्थितं प्राक् । नाप्येकसामग्र्यधीनत्वं समुदायैकत्वनियमनिबंधनं धूमेंधनविकारादिरूपादीना नानासमुदायाना-मेकसमुदायत्वानुषंगात् प्रतीतमातुलिंगरूपादिवत् । एतेन समानकालत्वं तन्निमित्तमिति प्रत्युक्तं, एक-द्रव्याधिकरणत्व तु सहभुवामेकसमुदायत्वव्यवस्थाहेतुरिति सत्येवान्विते द्रव्ये तिलादिरूपादिसमुदायै-कत्वनियमः साधर्म्यं । न पुनर्नानाद्रव्याणां समानहेतुकत्वादिति वार्तामात्र, विसदृशहेतूनामपि बहुलं साधर्म्यदर्शनात् । रजतशुक्तिकादिवत् समानपरिणामसत्त्वात् साधर्म्ये भावप्रत्यासत्तिविशेषादेव साधर्म्यं । न च समानपरिणामो नाना परिणामिद्रव्याभावे सभवतीति न तद्वादिनामेकद्रव्यापह्नवः श्रेयान् । प्रेत्यभावः कथमेकत्वाभावे न स्यादितिचेत् तस्य मृत्वा पुनर्भवनलक्षणत्वात् । संतानस्यैव मृत्वा पुनर्भवनं न पुन-र्द्रव्यस्येति चेन्न, संतानस्यैकद्रव्याभावे नियमायोगस्य प्रतिपादनात् । कथंचिदेकद्रव्यात्मनो जीवस्य प्रेत्य-भावसिद्धेः । पुण्यपापाद्यनुष्ठानं पुनरपि संवाहकर्तृक्रियाफलानुभवितृनानात्वे कृतनाशाकृताभ्यागमप्रसक्ते-र्दूरोत्सारितमेव । तत्संतानैक्ये चैकद्रव्यत्वस्य सिद्धेर्न निरन्वयक्षयैकांतस्तद्वादिभिरभ्युपगंतव्यः । ततः सर्वथा संतानाद्युपगमे द्रव्यस्य कालांतरस्थायिनः प्रसिद्धेर्न क्षणादूर्ध्वमस्थितिः पदार्थानाम् ॥

**यथा चैकक्षणस्थायी भावो हेतोः समुद्भवेत् । तथानेकक्षणस्थायी किन्न लोके प्रतीयते ॥२३॥**

ननु प्रथमे क्षणे यथार्थानां क्षणद्वयस्थास्नुता तथा द्वितीयेपीति न कदाचिद्विनाशः स्यादन्यथा सैव क्षणस्थितिः प्रतिक्षणं स्वभावात्ततो न कालांतरस्थायी भावो हेतोः समुद्भवन् प्रतीयतेऽन्यत्र विभ्रमादिति

तत्सिद्धौ च स्वस्य स्वलक्षणदर्शनप्रभवत्वसिद्धिरिति नान्यतरस्यापि तयोर्व्यवस्था । स्वलक्षणदर्शनप्रभवत्वं नीलादिविकल्पस्य स्वसंवेदनादेव सिद्धं सर्वेषां विकल्पस्य प्रत्यात्मवेद्यत्वात् ततो नान्योन्याश्रय इति चेत्, तर्हि भावाभावोभयादिविकल्पस्याप्यलिंगजस्य शब्दजस्य च भावादिदर्शनप्रभवत्वं स्वसंवेदनादेव कुतो न सिध्येत्? सर्वथा विशेषाभावात् । तदयं नीलाद्यर्थं पारमार्थिकमिच्छता चाद्यमवितथोपगंतुमर्हत्येवेति तदनुमाने सप्त हेतवः स्युः । यतश्चैवं कृत्तिकोदयादेः कथंचित्प्रतीत्यतिक्रमेण स्वभावहेतुत्वं ब्रुवतः सर्वः स्वभावहेतुः स्यादेक एव । सबधभेदात्तद्भेदं साधयतः सामान्यतो विशेषतश्च स्वेष्टलिंगसंख्याक्षतिः । विषयभेदाच्च तद्भेदमिच्छतः सप्तविधो हेतुरर्थस्यास्तित्वादिसप्तरूपतयानुमेयत्वोपपत्तेः ॥

**तस्मात्प्रतीतिमाश्रित्य हेतुं गमकमिच्छता । पक्षधर्मत्वशून्योस्तु गमकः कृत्तिकोदयः ॥१५५॥**
**पल्वलोदकनैर्मल्यं तदागस्त्युदये स च । तत्र हेतुः सुनिर्णीतः पूर्वं शरदि सन्मतः ॥ १५६ ॥**
**चंद्रादौ जलचंद्रादि सोपि तत्र तथाविधः । छायादिपादपादौ च सोपि तत्र कदाचन॥१५७**
**पर्णकोयं स्वमद्धेतुर्बलादाहेति दृग्गे । कार्यकारणभावस्याभावेपि सहभाविता ॥ १५८ ॥**
**पित्रोर्ब्राह्मणता पुत्रब्राह्मण्ये पक्षधर्मकः । सिद्धो हेतुरतो नायं पक्षधर्मत्वलक्षणः ॥ १५९ ॥**

नन्वाकाशकालादेर्धर्मित्वे भविष्यच्छकटोदयपल्वलोदकनैर्मल्यादेः साध्यत्वे कृत्तिकोदयागस्त्युदयादेर्हेतुत्वे पक्षधर्मत्वयुक्तस्यैव हेतुत्वमतो नापक्षधर्मत्वलक्षणो हेतुः कश्चिदिति चेत्, किमेवं चाक्षुषत्वादिः शब्दानित्यत्वहेतुर्न स्यात्? न हि जगतो वा धर्मचाक्षुषत्व महानसधूमः पक्षधर्मः । तथाहि—शब्दानित्ययोगि जगच्चाक्षुषत्वयोगित्वात् महोदधि जगत् महानसधूमयोगित्वादिति कथं न चाक्षुषत्वं शब्दानित्यत्वं साधयेत् महानसधूमो वा महोदधौ वह्निं तथा त्वया संभवादिति चेत् कृत्तिकोदयादेः कुतोन्वयसंभवः पूर्वोपलब्धाकाशादेर्दृष्टांतस्य सद्भावादन्वयः सिध्यतीति चेत्, पूर्वोपलब्धजगतो दृष्टांतस्य सिद्धेश्चाक्षुषत्वयोगित्वादेरन्वयोस्तु विशेषाभावात् तथाप्यस्याविनाभावासंभवादगमकत्वेऽविनाभावस्वभावमेव पक्षधर्मत्वं गमकत्वागं लिंगस्य लक्षणं । तथा च न धर्मधर्मिसमुदायः पक्षो नापि तत्तद्धर्मी तद्धर्मत्वस्याविनाभावस्वभावत्वाभावात् । किं तर्हि, साध्य एव पक्ष इति प्रतिपत्तव्यं तद्धर्मत्वस्यैवाविनाभावित्वनियमादित्युच्यते ॥

**साध्यः पक्षस्तु नः सिद्धस्तद्धर्मो हेतुरित्यपि । तादृक्षपक्षधर्मत्वसाधनाभाव एव वै ॥ १६० ॥**

कथं पुनः साध्यस्य धर्मस्य धर्मो हेतुस्तस्याधर्मित्वप्रसंगादिति चेत् न, तेनाविनाभावात्तस्य धर्म इत्यभिधानात् । न हि साध्याधिकरणत्वात्साध्यधर्मः हेतुर्येन साध्यधर्मा धर्मी स्यात् । ततः साध्याविनाभावी हेतुः पक्षधर्म इति स्याद्वादिनामेव पक्षधर्मत्वं हेतोर्लक्षणमविरुद्धं स्पष्टमविनाभावित्वस्यैव तथाभिधानात् । तच्च कृत्तिकोदयादिषु साध्यधर्मिण्यसत्त्वपि यथा प्रतीतिर्विद्यत एवेति किमाकाशादिधर्मिपरिकल्पनया प्रतीत्यतिलंघनापरयातिप्रसंगिन्या । तथा च न परिकल्पितं पक्षधर्मत्वं हेतोर्लक्षणं नाप्यन्वय इत्यभिधीयते ॥

**निःशेषं सात्मकं जीवच्छरीरं परिणामिना । पुंसा प्राणादिमत्त्वस्य त्वन्यथानुपपत्तितः १६१**
**सपक्षसत्त्वशून्यस्य हेतोरस्य समर्थनात् । नूनं निश्चीयते सद्भिर्नान्वयो हेतुलक्षणम् ॥ १६२ ॥**
**न चादर्शनमात्रेण व्यतिरेकः प्रसाध्यते । येन संशयहेतुत्वं रागादौ वक्तृतादिवत् ॥ १६३ ॥**
**आत्माभावो हि भस्मादौ तत्कार्यस्यासमीक्षणात् । सिद्धः प्राणाद्यभावश्च व्यतिरेकविनिश्चयः १६४**

**वाक्क्रियाकारभेदादेरत्यंताभावनिश्चितः । निवृत्तिर्निश्चिता तज्ज्ञैः चिंता व्यावृत्तिसाधनी १६५**
**सर्वकार्यासमर्थस्य चेतनस्य निवर्तनं । ततश्चेत्केन साध्येत कूटस्थस्य निषेधनम् ॥ १६६ ॥**

यथा हि सर्वकारणासमर्थं चैतन्य कार्याभावाद्भस्मादौ निषेद्धुमशक्य तथा कूटस्थमपि क्रमयौगपद्या-भ्यामर्थक्रियाविरोधात् ॥

**क्षणिकत्वेन न व्याप्तं सत्त्वमेवं प्रसिद्ध्यति । संदिग्धव्यतिरेकाच्च ततोसिद्धिः क्षणक्षये ॥१६७॥**
**चेतनाचेतनार्थानां विभागश्च न सिद्ध्यति । चित्तसंताननानात्वं निजसंतान एव वा ॥१६८॥**
**न वेद्यवेदकाकारविवेकोनः स्वसंविदः । सर्वकार्येष्वशक्तस्य स त्वसंभवभाषणे ॥ १६९ ॥**

न सति चेतनेष्वचेतनार्थास्तच्छेदनादिकार्यासत्त्वात् । तथा न संत्यचेतनार्थेषु चेतनार्थास्तत एवेति चेतनाचेतनविभागो न सिद्ध्यत्येव सर्वकार्यकरणासमर्थाना तेषा तत्र निषेद्धुमशक्तेः । चेतनार्था एव संतु तथा विज्ञानवादावताराज्जडस्य प्रतिभासयोगादिति चेन्न, तथा विज्ञानसतानानां नानात्वाप्रसिद्धेः । क्वचिच्चित्तसंतते सतानांतराणां सर्वकार्यकरणासमर्थानां स्वकार्यासत्त्वेपि सत्त्वाविरोधात् । मा भूत्संतानांतरसिद्धिरन्यथेष्टेरितिचेन्न, निजसंतानस्याप्यसिद्धिप्रसगात् । वर्तमानचित्तक्षणे संवेद्यमाने पूर्वोत्तरचित्तक्षणानामनुभवमात्रमप्यकुर्वता प्रतिषेद्धुमशक्यत्वादेकचित्तक्षणात्मकत्वापत्तेः । न चैकः क्षणः सतानो नाम तत एव सवेदनाद्वैतमस्तु उत्तमं पानद्वयमिति वचनात् । नेदमपि सिद्ध्यति वेद्यवेदकाकारविवेकस्याव्यवस्थानात् । सवेदने वेद्यवेदकाकारौ न स्तः स्वयमप्रतिभासनादिति न शक्यं वक्तुमप्रतिभासमानयोः सत्त्वविरोधात् । तत. क्वचित्कस्यचित्प्रतिभासनादेः स्वकार्यस्याभावादभावसाधने भस्मादौ चैतन्यस्य स्वकार्यनिवृत्तिनिश्चयादभावो निश्चेतव्य इति विपक्षे बाधकप्रमाणादेव प्राणादिमत्त्वस्य व्यतिरेकः साध्यते न पुनरदर्शनमात्रेण यतः संशयहेतुत्वं रागादौ वक्तृत्वादेरिव स्यात् । न चैवमपरिणामिनात्मना सात्मकं जीवच्छरीरस्य सिद्ध्यति । यतः—

**परिणामिनमात्मानमंतरेण क्रमाक्रमौ । न स्यातां तदभावे च न प्राणादिक्रिया क्वचित्१७०**
**तत्रैकांतात्मना जीवच्छरीरं सात्मकं भवेत् । निष्कलस्य सहानेकदेशदेहास्तिहानितः ॥१७१॥**

निष्कलः सकृदनेकदेशदेहं व्याप्नोत्यात्मेति कः श्रद्दधीत ? परममहत्त्वाद्व्याप्नोत्येवेति चेद्व्याहतमिदं निरंशः परममहान् वेति परमाणोरपि परममहत्त्वप्रसंगात् । यदि पुनः स्वारंभकावयवाभावान्निरवयवत्वमात्मनो गगनत्वादिवदिति मतं तदा परमतसिद्धिः सर्वथा निरवयवत्वासिद्धेः परमाणुप्रमीयमाणस्वात्मभूतावयवानामात्मनोप्रतिषेधादिति समर्थयिष्यते ॥

**अनेकांतात्मकं सर्वं सत्त्वादित्यादि साधनं । सम्यगन्वयशून्यत्वेप्यविनाभावशक्तितः ॥१७२॥**
**नित्यानित्यात्मकः शब्दः श्रावणत्वात्कथंचन । शब्दत्वाद्वान्यथाभावाभावादित्यादिहेतवः १७३**
**हेतोरन्वयवैधुर्ये व्यतिरेको न चेन्न वै । तेन तस्य विनिर्वेष्टेः सर्वानित्यत्वसाधने ॥ १७४ ॥**

निश्चितो व्यतिरेक एव ह्यविनाभावः साधनस्य नान्यः स चोपदर्शितस्य सर्वस्य हेतोरन्वयासंभवेन सिद्ध्यत्येव । सत्येवाग्नौ धूम इत्यन्वयनिश्चयेग्न्यभावे न क्वचिद्धूम इति व्यतिरेकनिश्चयस्य दृष्टत्वात् । संदिग्धेन्वयव्यतिरेकसंदेहाच्चेति न वै मंतव्यं सर्वे भावाः क्षणिकाः सत्त्वादित्यस्यान्वयासत्त्वेपि व्यतिरेकनिश्चयस्य स्वयमिष्टेरन्यथा तस्य गमकत्वायोगात् । नन्वत्र सत्येव क्षणिकत्वे सत्त्वमिति निश्चयमेवान्वयोस्तीति चेत् । अत्रोच्यते;—

**साध्ये सत्येव सद्भावनिश्चयः साधनस्य यः । सोन्वयश्चेत्तथैवोपपत्तिः स्वेष्टा परोऽफलः ॥१७५**

यथैव प्रतिषेधप्राधान्यादन्यथानुपपत्तिर्व्यतिरेक इतीष्यते तथाविधप्राधान्यात्तथोपपत्तिरेवान्वय इति किमनिष्टं स्याद्वादिभिस्तस्य हेतुलक्षणत्वोपगमात् । परोपगतस्तु नान्वयो हेतुलक्षणं पक्षधर्मत्ववत् नापि व्यतिरेकः । स हि विपक्षाद्व्यावृत्तिः विपक्षस्तद्विरुद्धस्तदन्यस्तदभावश्चेति त्रिविध एव । तत्र—

**तद्विरुद्धे विपक्षे च तदन्यत्रैव हेतवः । असत्यनिश्चितासत्त्वाः साकल्यान्नेष्टसाधनाः । १७६॥**

यथा साध्यादन्यस्मिन् विपक्षे निश्चितासत्त्वा अपि हेतवोऽग्नित्वादयो नेष्टाः सत्त्वादिसाधनास्तेषां साध्याभावलक्षणेऽपि पक्षे कुतश्चिदनिश्चितासत्त्वरूपत्वात् । तथा साध्याविरुद्धेऽपि विपक्षे निश्चितासत्त्वा अपि धूमादयो नेष्टा अग्न्यादिसाधनास्तेषामग्न्यभावे स्वयमसत्त्वेनानिश्चयात् । ननु च साध्यविरुद्धो विपक्षः साध्याभावरूप एव पर्युदासाश्रयणात् प्रसज्यप्रतिषेधाश्रयणे तु तदभावस्तद्विरुद्धादन्य इति साध्याभावविपक्ष एव विपक्षहेतोरसत्त्वनिश्चयो व्यतिरेको नान्य इत्यत्रोच्यते:—

**साध्याभावे विपक्षे तु योऽसत्त्वस्यैव निश्चयः । सोऽविनाभाव एवास्तु हेतो रूपात्तथाह च१७७**
**अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् । नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्॥ १७८ ॥**

यथा चैवमन्यथानुपपन्नत्वनियमे सति हेतोर्न किंचित्त्रयेण पक्षधर्मत्वादीनामन्यतमेनैव पर्याप्तत्वात्तस्यैवान्यथानुपपन्नस्वभावसिद्धेरिति च तस्मिंस्तत्त्रयस्य हेत्वाभासगतस्येवाकिंचित्करत्वं युक्त ॥

**तद्धेतोस्त्रिषु रूपेषु निर्णयो येन वर्णितः । असिद्धविपरीतार्थव्यभिचारिविपक्षतः ॥ १७९ ॥**
**तेन कृतं तु निर्णीतं हेतोर्लक्षणमंजसा । हेत्वाभासाव्यवच्छेदि तद्वदेत्कथमन्यथा ॥ १८० ॥**

ननु च पक्षधर्मत्वे निर्णयश्चाक्षुषत्वादेरसिद्धप्रपचस्य प्रतिपक्षत्वेन वर्णितः सपक्षसत्त्वे विरुद्धप्रपंचप्रतिपक्षत्वेन विपक्षासत्त्वे चानैकान्तिकविस्तारप्रतिपक्षेणेति कथं हेत्वाभासाव्यवच्छेदि हेतोर्लक्षणं तेनोक्तं येन पारमार्थिकं रूप ज्ञानमितिचेत् अन्यथानुपपन्नत्वस्यैव हेतुलक्षणत्वेनाभिधानादिति ब्रूमः । तस्यैवासिद्धविरुद्धानैकान्तिकहेत्वाभासप्रतिपक्षत्वसिद्धेः । न ह्यन्यथानुपपन्नत्वनियमवचनेऽसिद्धत्वादिसंभवो विरोधात् । न चैकेन सकलप्रतिपक्षव्यवच्छेदे सिद्धे तदर्थं त्रयमभिदधता तदेकं समर्थं लक्षणं हेतोर्ज्ञातं भवति तदेव त्रिभिः स्वभावैरसिद्धादीनां त्रयाणां व्यवच्छेदकमतस्तानि त्रीणि रूपाणि निश्चितान्यनुक्तानि । तदवचने विशेषतो हेतुलक्षणसामर्थ्यस्यावचनप्रसंगात् । तदुक्तौ तु विशेषतो हेतुलक्षण ज्ञातमेवेतिचेत् न, अबाधितविषयत्वादीनामपि वचनप्रसंगात् । तेषामनुक्तौ बाधितविषयत्वादिव्यवच्छेदासिद्धेः । निश्चितत्रैरूप्यस्य हेतोर्बाधितविषयत्वाद्यसंभवात्तद्वचनादेव तद्व्यवच्छेदसिद्धेर्नाबाधितविषयत्वादिवचनमिति चेत् न, हेतोः पंचभिः स्वभावैः पंचानां पक्षव्यापकत्वादीनां व्यवच्छेदकत्वाद्विशेषतल्लक्षणस्यैव कथनात् अन्यथा तदज्ञानप्रसंगात् । तद्विशेषविवक्षायां तु पंचरूपत्ववत् त्रिरूपत्वमिति न वक्तव्यं सामान्यतोऽन्यथानुपपन्नत्ववचनेनैव पर्याप्तत्वात्, रूपत्रयमंतरेण हेतोरसिद्धादित्रयव्यवच्छेदानुपपत्तेः । तत्र तस्य तद्भावादुपपन्नं वचनमिति चेत्—

**रूपत्रयस्य सद्भावात्तत्र तद्वचनं यदि । निश्चितत्वस्वरूपस्य चतुर्थस्य वचो न किम् ॥ १८१ ॥**
**त्रिषु रूपेषु चेद्रूपं निश्चितत्वं न साधने । नाज्ञाता सिद्धता हेतो रूपं स्यात्तद्विपर्ययः ॥१८२॥**
**पक्षधर्मत्वरूपं स्याज्ज्ञातत्वे हेत्वभेदिनः । हेतोरज्ञाननेष्टा चेन्निश्चितत्वं तथा न किम्॥१८३॥**
**हेत्वाभासेऽपि तद्भावात्साधारणतया न चेत् । धर्मांतरमिवारूपं हेतोः सदपि संमतम् ॥१८४॥**
**हंतासाधारणं सिद्धं साधनस्यैकलक्षणं । तत्त्वतः पावकस्यैव सोष्णत्वं तद्विदां मतम् ॥ १८५॥**

यो यस्यासाधारणो निश्चितः स्वभावः स तस्य लक्षणं यथा पावकस्यैव सोष्णत्वपरिणामस्तथा च

हेतोरन्यथानुपपन्नत्वनियम इति न साधारणानामन्यथानुपपत्तिनियमविकलानां पक्षधर्मत्वादीनां हेतुलक्षणत्वं निश्चितं तत्त्वमात्रवत् ॥

**एतेन पंचरूपत्वं हेतोर्ध्वस्तं निबुध्यते । सत्त्वादिष्वग्निजन्यत्वे साध्ये धूमस्य केनचित् ॥१८६॥**

अग्निजन्योयं धूमः सत्त्वात् द्रव्यत्वाद्वा धूमे सत्त्वादेरसंदिग्धत्वात् । तथान्वयं पूर्वदृष्टधूमेग्निजन्यत्वे व्याप्तस्य सत्त्वादेः सद्भावात् व्यतिरेकश्च खरविषाणादौ साध्याभावे साधनस्य सत्त्वादेरभावनिश्चयात् । तथात्राबाधितविषयत्वं विवादापन्ने धूमेग्निजन्यत्वस्य बाधकाभावात् । तत एवासत्प्रतिपक्षत्वमनग्निजन्यत्वसाधनप्रतिपक्षानुमानसंभवादिति सिद्धं साधारणत्वं पंचरूपत्वस्य त्रैरूप्यवत् सामस्त्येन व्यतिरेकनिश्चयस्याभावादसिद्धमिति चेन्न, तस्यान्यथानुपपन्नत्वरूपत्वात् । तदभावे शेषाणामकिंचित्करत्वापत्तेस्तद्विकल्पस्यैव पंचरूपत्वादेरलक्षणत्वेन साध्यत्वाद्युक्तोतिदेशः । एवमन्वयव्यतिरेकिणो हेतोः पंचरूपत्वमलक्षणं व्यवस्थाप्यान्वयिनोपि नान्वयो लक्षणं साधारणत्वादेवेत्याह;—

**अन्वयो लोहलेख्यत्वे पार्थिवत्वेशनेस्तथा । तत्पुत्रत्वादिषु श्यामरूपत्वे क्वचिदीप्सिते ॥१८७॥**

लोहलेख्योऽशनिः पार्थिवत्वाद्धातुरूपवत्, स श्यामरूपस्तत्पुत्रत्वात्तन्नमृत्वाद्वा परिदृष्टतत्पुत्रादिवदिति हेत्वाभासेपि सद्भावादन्वयस्य साधारणत्वं । ततो हेत्वलक्षणत्वं । यस्तु साध्यसद्भाव एव भावो हेतोरन्वयः सोऽन्यथानुपपन्नत्वमेव तथोपपत्त्याख्यमसाधारणं हेतुलक्षणं । परोपगतस्तु नान्वयस्तल्लक्षणं नापि केवलव्यतिरेकिणो व्यतिरेक इत्याह—

**अदृष्टिमात्रसाध्यश्च व्यतिरेकः समीक्ष्यते । वक्तृत्वादिषु बुद्धादेः किंचिज्ज्ञत्वस्य साधने १८८**

**साध्याभावे त्वभावस्य निश्चयो यः प्रमाणतः । व्यतिरेकः स साकल्याद् विनाभाव एव नः १८९**

सत्यप्यबाधितविषयतायां सत्यप्यसत्प्रतिपक्षतायां च हेतौ न रूपांतरत्वमन्यथानुपपन्नत्वादित्याह;—

**अबाधितार्थता च स्यान्नान्या तस्मादसंशया । न वा सत्प्रतिपक्षत्वं तदभावेनभीक्षणात् १९०**

न हि क्वचिद्धेतौ साध्याभावासंभूष्णुतापायेप्यबाधितविषयत्वमसत्प्रतिपक्षत्वं समीक्ष्यते येन ततो रूपांतरत्वं । ननु च यथा स्पर्शाभावे क्वचिदसभवतोपि रूपस्य स्पर्शाद्रूपांतरत्वं तथाविनाभावाभावे क्वचिदसंभवतोपि ततो रूपांतरत्वमबाधितविषयत्वस्यासत्प्रतिपक्षत्वस्य च न विरुध्यतेन्यथा स्पर्शाद्रूपस्यापि रूपांतरत्वविरोधादिति चेत् नैतत्सारं, अन्यथानुपपन्नत्वादबाधितविषयत्वादेरभेदात् । साध्याभावप्रकारेणोपपत्तेरभावो ह्यन्यथानुपपत्तिः स एव वाबाधितविषयत्वमसत्प्रतिपक्षत्वं च प्रतीयते ततोन्यत् किंचिन्नैवं स्पर्शाद्रूपस्याभेदः प्रतीतिभेदात्ततो विषमोऽयमुपन्यासः । ननु हेतूपन्यासे सति क्रमेण प्रतीयमानत्वादविनाभावाबाधितविषयत्वादीनामपि परस्परं भेद एवेति चेन्न, बाधकक्रमापेक्षत्वात्तत्क्रमप्रतीतेः । शक्रेंद्रपुरंदरादिप्रतीतिवदर्थप्रतीतेः क्रमाभावात् । न ह्यभिन्नेप्यर्थे बाधकभेदो विरुद्धो यतस्तत्क्रमप्रतीतिरर्थभेदक्रमं साधयेत् । ततो नाममात्रं भिद्यते हेतोरन्यथानुपपन्नत्वमबाधितविषयत्वमसत्प्रतिपक्षत्वमिति नार्थः । एतेन यदुक्तं हेतोरबाधितविषयत्वाभावेऽनुष्णोग्निर्द्रव्यत्वात् नित्यो घटः सत्त्वात् प्रेत्यासुखप्रदो धर्मः पुरुषगुणविशेषत्वादित्येवमादेः प्रत्यक्षानुमानाभ्यामबाधितविषयस्याप्यगमकत्वप्रसक्तिरसत्प्रतिपक्षत्वाभावे च सत्प्रतिपक्षस्य सर्वगतं सामान्यं सर्वत्र सत्प्रत्ययहेतुत्वादित्येवमादेर्गमकत्वापत्तिरिति तत्प्रत्याख्यातं । प्रत्यक्षादिभिः साध्यविपरीतस्वभावव्यवस्थापनस्य बाधितविषयत्वस्य वचनात् । प्रतिपक्षानुमानेन च तस्य सत्प्रतिपक्षत्वस्याभिधानात् तद्व्यवच्छेदस्य च साध्यस्वभावेन तथोपपत्तिरूपेण

सामर्थ्यादन्यथानुपपत्तिस्वभावेन सिद्धत्वादबाधितविषयत्वादे रूपांतरत्वकल्पनानर्थक्यात् सत्यपि तस्य रूपांतरत्वे तन्निश्चयासंभवः परस्पराश्रयणात् तत्साध्यविनिश्चययोरित्याह—

**यावच्च साधनादर्थः स्वयं न प्रतिनिश्चितः । तावन्न बाधनाभावस्तत्स्याच्छक्यविनिश्चयः १९१**

सति हि बाधनाभावनिश्चये हेतोरबाधितविषयत्वासत्प्रतिपक्षत्वसिद्धेः साध्यनिश्चयस्तन्निश्चयाच्च बाधनाभावनिश्चय इतीतरेतराश्रयान्न तयोरन्यतरस्य व्यवस्था । यदि पुनरन्यतः कुतश्चित्तद्बाधनाभावनिश्चयात्तदनिश्चयांगीकरणाद्वा परस्पराश्रयपरिहारः क्रियते तदाप्यकिंचित्करत्वं हेतोरुपदर्शयन्नाह;—

**तद्बाधाभावनिर्णीतिः सिद्धा चेत्साधनेन किम् । यथैव हेतोर्वेशस्य बाधासद्भावनिश्चये ॥१९२**

तत्साधनसमर्थत्वादकिंचित्करत्वं तथा वा विरहनिश्चये कुतश्चित्तस्य सद्भावसिद्धेः । सततसाधनाय प्रवर्तमानस्य सिद्धसाधनादपि न साधीयस्तल्लक्षणत्वं । नन्वेवमविनाभावोपि लक्षणं मा भून्निश्चयस्यापि साध्यसद्भावनियमनिश्चयायत्तत्वात् तस्य चाविनाभावाधीनत्वादितरेतराश्रयस्य प्रसंगात् इति चेन्न, अविनाभावनियमस्य हेतौ प्रमाणातरानिश्चयोपगमादितरेतराश्रयानवकाशात् । ऊहाख्यं हि प्रमाणमविनाभावनिश्चयनिबंधनं प्रत्यक्षानुमानयोस्तत्राव्यापारादित्युक्तं तर्हि यत एवान्यथानुपपन्नत्वनिश्चयो हेतोस्तत एव साध्यसिद्धेस्तत्र हेतोरकिंचित्करत्वमिति चेन्न, ततो देशादिविशेषावच्छिन्नस्य साध्यस्य साधनात् सामान्यत एवोहात्तत्सिद्धेरित्युक्तप्रायं । अथवा—

**त्रिरूपहेतुनिष्ठानवादिनैव निराकृते । हेतोः पंचस्वभावत्वे तद्ध्वंसे यतनेन किम् ॥ १९३ ॥**

न हि स्याद्वादिनामयमेव पक्षो यत्स्वयं पंचरूपत्वं हेतोर्निराकर्तव्यमिति त्रिरूपव्यवस्थानवादिनापि तन्निराकरणस्याभिमतत्वात् परमतमभिमतप्रतिषिद्धमितिवचनात् तदलमत्राभिप्रयतनेनेति हेतुलक्षणं वार्तिककारेणैवमुक्तं "अन्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम्" इति स्वयं स्याद्वादिनां तु तन्निराकरणप्रयत्ने त्रयं पंचरूपत्वं किमित्यपि वक्तुं युज्यते सांप्रतं पूर्ववदादित्रयेण वीतादित्रयेण वा किमिति व्याख्यानांतरं समर्थयितुं प्रत्यक्षपूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं चेति न्यायसूत्रस्य वाक्यभेदात्त्रिसूत्री कैश्चित्परिकल्पिता स्यात् तामनूद्य निराकुर्वन्नाह;—

**पूर्वं प्रसज्यमानत्वात् पूर्वपक्षस्ततोपरः । शेषः सुपक्ष एवेष्टस्तद्योगो यस्य दृश्यते ॥ १९४ ॥**
**पूर्ववच्छेषवत्प्रोक्तं केवलास्वपि साधनम् । साध्याभावे भवत्तच्च त्रिरूपान्न विशिष्यते ॥१९५॥**
**यस्य वैधर्म्यदृष्टांताधारः कश्चन विद्यते । तस्यैव व्यतिरेकोस्ति नान्यस्येति न युक्तिमत् ॥१९६॥**
**ततो वैधर्म्यदृष्टांतेनेष्टोवश्यमिहाश्रयः । तदभावेप्यभावस्याविरोधाद्धेतुतद्वतोः ॥ १९७ ॥**
**केवलव्यतिरेकीष्टमनुमानं न पूर्ववत् । तथा सामान्यतो दृष्टं गमकत्वं न तस्य वः ॥ १९८ ॥**
**तद्विरुद्धे विपक्षस्यासत्त्वे व्यवसितेपि हि । तदभावे त्वनिर्णीते कुतो निःसंशयात्मता ॥१९९॥**
**यो विरुद्धोत्र साध्येन तस्याभावः स एव चेत् । ततो निवर्तमानश्च हेतुः स्याद्वादिनां मतम् २००**
**अन्वयव्यतिरेकी च हेतुर्यस्तेन वर्णितः । पूर्वानुमानसूत्रेण सोप्येतेन निराकृतः ॥ २०१ ॥**
**कार्यादित्रयवत्तस्मादेतेनापि त्रयेण किम् । भेदानां लक्षणानां च वीतादित्रितयेन च ॥२०२॥**

पूर्ववच्छेषवत्केवलान्वयिसाधनं यथावयववावयविनौ गुणगुणिनौ क्रियाक्रियावंतौ जातिजातिमंतौ वा परस्परतो भिन्नौ भिन्नप्रतिभासत्वात् सह्यविंध्यवदिति तत्साध्याभावेपि यदि सत्तदानैकांतिकमेव । अथासत्कथं न व्यतिरेक्यपि ? साध्याभावे साधनस्याभावो हि व्यतिरेकः स चास्यास्तीति तदा केवलान्वयि लिंगं त्रिरूपादविशिष्टत्वात् वैधर्म्यदृष्टांताधाराभावान्नास्य व्यतिरेक इति चेन्नेदं युक्तिमत्, तदभावेपि

साध्याभावप्रयुक्तस्य साधनाभावस्याविरोधात् । न ह्यभावे कस्यचिदभावो विरुध्यते खरविषाणाभावे गगनकुसुमाभावस्य विरोधप्रसंगात् सर्वत्र वैधर्म्यदृष्टांतेधिकरणस्यावश्यं भावितयानिष्टत्वाच्च । किं चेदं भिन्नप्रतिभासित्वं यदि कथंचित्तदान्यथानुपपन्नत्वादेव कथंचिद्भेदसाधनं नान्वयित्वात् द्रव्यं गुणकर्म-सामान्यविशेषसमवायप्रागभावादयः प्रमेयत्वात् पृथिव्यादिवदित्येतस्यापि गमकत्वप्रसंगात् । धर्मिग्राहक-प्रमाणबाधितत्वेन कालात्ययापदिष्टत्वान्नेदं गमकमितिचेत्, तर्ह्यबाधितविषयत्वमपि लिंगलक्षणं तच्चान्य-थानुपपन्नत्वमेवेत्युक्त । सत्प्रतिपक्षत्वान्नेदं गमकत्वमिति चेत्तर्हि असत्प्रतिपक्षत्वं हेतुलक्षणं तदप्यविना-भाव एवेति निवेदितं ततोन्यथानुपपन्नत्वाभावादेवेदमगमकं । एतेन सर्वथा भिन्नप्रतिभासत्वं भेदसाधन-मगमकमुक्तं कालात्ययापदिष्टत्वसत्प्रतिपक्षत्वाविशेषात् । अवयवादीनां हि सत्त्वादिना कथंचिदभेदः प्रमाणेन प्रतीयते सर्वथा तद्भेदस्य सकृदप्यनवभासनात् । तत एवासिद्धत्वान्नेदं गमकं सिद्धस्यैवान्यथा-नुपपत्तिसंभवात् । तथा पूर्ववत्सामान्यतोऽदृष्टं केवलव्यतिरेकि लिंगं विपक्षे देशतः कार्त्स्न्यतो वा तस्या-दृष्टत्वात् । सात्मकं जीवच्छरीरं प्राणादिमत्त्वात् यन्न सात्मकं तन्न प्राणादिमद् दृष्टं यथा भस्मादि न च तथा जीवच्छरीरं तस्मात्सात्मकमिति । तदेतदपि न परेषां गमकं । साध्यविरुद्धे विपक्षे अनुभूय-मानमपि साध्याभावे विपक्षे स्वयमसत्त्वेनानिश्चयात् तत्र तत्र तस्य तत्त्वसंभावनायां नैकांतिकत्वोपपत्तेः साध्यविरुद्ध एव साध्याभावस्ततो निवर्तमानत्वाद्गमकमेवेदमिति चेत् तर्हि तदन्यथानुपपन्नत्वसाधनं साध्याभावसंभवनियमस्यैव स्याद्वादिभिरविनाभावस्येष्टत्वात् न पुनः केवलव्यतिरेकित्वान्नेदं क्षणिकं तत्सचित्तशून्यं जीवच्छरीरं प्राणादिमत्त्वात् सर्वं क्षणिकं सत्त्वादित्येवमादेरपि गमकत्वप्रसंगात् । साध्या-भावेप्यस्य सद्भावान्न साधनत्वमितिचेत् तर्ह्यन्यथानुपपत्तिबलादेव परिणामिना सात्मकत्वे प्राणादिमत्त्वं साधनं नापरिणामिना सर्वथा तदभावात् । तथा पूर्ववच्छेषवत्सामान्यतो दृष्टमन्वयव्यतिरेकिसाधनं, यथाग्निरत्र धूमादिति । तदपि केवलव्यतिरेकिणो योगोपगतस्य निराकरणादेव निराकृतं, साध्याभाव-संभवनियमनिश्चयमंतरेण साधनत्वासंभवात् । तदनेन न्यायवार्तिकटीकाकारव्याख्यानमनुमानसूत्रस्य त्रिसूत्रीकरणेन प्रत्याख्यातं प्रतिपत्तव्यमिति लिंगलक्षणानामन्वयित्वादीनां त्रयेण पक्षधर्मत्वादीनामिव न प्रयोजनं । नापि पूर्ववदादिभेदानां कार्यादीनामिव सत्यन्यथानुपपन्नत्वे तेनैव पर्याप्तत्वात् । यदप्यत्रा-वाचि उदाहरणसाधर्म्यात्साध्यसाधनं हेतुरिति वीतलक्षणं लिंगं तत्स्वरूपेणार्थपरिच्छेदकत्वं वीतधर्म इति वचनात् । तद्यथा—अनित्यः शब्दः उत्पत्तिधर्मकत्वाद्घटवदिति शब्दस्वरूपेणोत्पत्तिधर्मकत्वेना-नित्यत्वार्थस्य परिच्छेदात् । तथोदाहरणवैधर्म्यात्साध्यसाधनं हेतुरित्यवीतलक्षणं परपक्षप्रतिषेधेनार्थपरि-च्छेदने वर्तमानमवीतमिति वचनात् । तद्यथा । नेदं नैरात्मकं जीवच्छरीरमप्राणादिमत्त्वप्रसंगादिति । यदुभयपक्षसंप्रतिपन्नमप्राणादिमत्तन्निरात्मकं दृष्टं यथा घटादि न चेदमप्राणादिमज्जीवच्छरीरं तस्मान्न निरात्मकमिति निरात्मकत्वस्य परपक्षस्य प्रतिषेधनं जीवच्छरीरे सात्मकत्वस्यार्थपरिच्छित्तिहेतुत्वादिति न्यायवार्तिककारवचनात् । तथोदाहरणसाधर्म्यवैधर्म्याभ्यां साध्यसाधनमनुमानमिति वीतावीतलक्षणं स्वपक्षविधानेन परपक्षप्रतिषेधेन चार्थपरिच्छेदहेतुत्वात् । तद्यथा—साग्निः पर्वतोयमनग्निर्न भवति धूमवत्त्वादन्यथा निर्धूमत्वप्रसंगात् । धूमवान्महानसः साग्निर्दृष्टोऽनग्निस्तु महानसो निर्धूम इति तदेत-द्वीतादित्रितयं यदि साध्यभावसंभूष्णुः तदान्यथानुपपत्तिबलादेव गमकत्वं न पुनर्वीतादित्वेनैवेत्यन्यथा-नुपपत्तिविरहेपि गमकत्वप्रसंगात् । यदि पुनरन्यथानुपपत्तिर्वीतादित्वं प्राप्य हेतोर्लक्षणं तदा "देवतां प्राप्य हरीतकी विरेचयते" इति कस्यचित्सुभाषितमायातं । हरीतक्यन्वयव्यतिरेकानुविधानाद्विरेचनस्य स्वदेवतोपयोगिनी तदन्वयव्यतिरेकानुविधानाभावात्तस्येति प्रकृतेपि समानं । हेतोरन्यथानुपपन्नत्वसद-

सत्त्वप्रयुक्तत्वाद्गमकत्वागमकत्वयोरिति न किंचिद्वीतादित्रितयेन लक्षणानां भेदानां वा सर्वथा गमकत्वानंगत्वात् सर्वभेदासंग्रहाच्च ॥

**कारणात्कार्यविज्ञानं कार्यात्कारणवेदनम् । अकार्यकारणाच्चापि दृष्टात्सामान्यतो गतिः २०३**
**तादृशी त्रितयेणापि नियतेन प्रयोजनम् । किमेकलक्षणाध्यासादन्यस्याप्यनिवारणात् ॥२०४॥**

ननु च यवबीजसंतानोत्थं च कारणं वानुभयं वा स्यात् सर्वं वस्तु कार्यं वा नान्या गतिरस्ति यतोऽन्यदपि लिंगं सभाव्यतेऽन्यथानुपपन्नत्वाध्यासादिति चेन्न, उभयात्मनोपि वस्तुनो भावात् । यथैव हि कारणात्कार्येनुमानं वृष्ट्युत्पादनशक्तयोमी मेघा गंभीरध्वानत्वे चिरप्रभावत्वे च सति समुन्नतत्वात् प्रसिद्धैवंविधमेघवदिति । कार्यात्कारणे वह्निरत्र धूमान्महानसवदिति । अकार्यकारणादनुभयात्मनि ज्ञानं मधुररसमिदं फलमेवंरूपत्वात्तादृशान्यफलवदिति । तथैवोभयात्मकात् लिंगादुभयात्मके लिंगिनि ज्ञानमविरुद्ध परस्परोपकार्योपकारकयोरविनाभावदर्शनात् यथा बीजांकुरसतानयोः । न हि बीजसंतानोंऽकुरसतानाभावे भवति, नाप्यंकुरसतानो बीजसंतानाभावे यतः परस्परं गम्यगमकभावो न स्यात् । तथा चास्त्यत्र देशे यवबीजसंतानो यवांकुरसंतानदर्शनात् । अस्ति यवांकुरसतानो यवबीजोपलब्धेरित्यादि लिंगातरसिद्धिः । ननूषरक्षेत्रस्थेन यवबीजसंतानेन व्यभिचारस्तदंकुरसंताने क्वचित्साध्ये तद्बीजसताने चोक्ष्यते तदंकुरसतानेन यवबीजमात्ररहितदेशस्थेनेति न मंतव्यं विशिष्टदेशकालाद्यपेक्षस्य तदुभयस्यान्योन्यमविनाभावसिद्धेः स्वसाध्ये धूमादिवत् । धूमावयविसंतानो हि पावकावयविसंतानैरविनाभावी देशकालाद्यपेक्ष्यैवान्यथा गोपालघटिकायां धूमावयविसंतानेन व्यभिचारप्रसगात् । संतानयोरुपकार्योपकारकभावोपि न शंकनीयः पावकधूमावयविसंतानयोस्तदभावप्रसंगात् । न चैवं वाच्यं, तयोर्निमित्तानिमित्तभावोपगमात् । पावकधूमावयविद्रव्ययोर्निमित्तानिमित्तभावसिद्धेस्तत्संतानयोरुपचारनिमित्तभाव इति चेन्न, तद्व्यतिरिक्तसंतानसिद्धेः । कालादिविशेषात्संतानः सतानिभ्यो व्यतिरिक्त इति चेत्, कुतः कालादिविशेषस्तेषां संतानस्यानादिपर्यवसानत्वादप्रतिनियतक्षेत्रकार्यकारित्वाच्च सतानिनां तद्विपरीतत्वादिति चेन्न, तस्य पदार्थांतरत्वप्रसंगात् । संतानो हि संतानिभ्यः सकलकार्यकरणद्रव्येभ्योर्थांतरं भवंस्तद्वृत्तिरतद्वृत्तिर्वा ? तद्वृत्तिश्चेन्न तावद्गुणस्तस्यैकद्रव्यवृत्तित्वात् । सयोगादिवदनेकद्रव्यवृत्तिः संतानो गुण इति चेत् स तर्हि सयोगादिभ्योऽन्यो वा स्यात्तदन्यतमो वा ? यद्यन्यः स तदा चतुर्विंशतिसंख्याव्याघातः, तदन्यतमश्चेत् तर्हि न तावत्सयोगस्तस्य विद्यमानद्रव्यवृत्तित्वात् । संतानस्य कालत्रयवृत्तिसंतानिसमाश्रयत्वात् । तत एव न विभागोपि परत्वमपि वा तस्यापि देशापेक्षस्य वर्तमानद्रव्याश्रयत्वात् । पृथक्त्वं इत्यप्यसारं, भिन्नसंतानद्रव्यपृथक्त्वस्यापि सतानत्वप्रसंगात् । तत एवमसख्योसौ । एतेन संयोगादीनां संतानत्वे भिन्नसंतानगतानामप्येषां संतानत्वप्रसंगः समापादितो बोद्धव्यः । कार्यकारणपरंपराविशिष्टा सत्तासतान इति चेत् कुतस्तद्विशिष्टः कार्यकारणोपाधित्वादितिचेत्, कथमेवमनेका सत्ता न स्यात् । विशेषणानेकत्वादुपचारादनेकास्त्वितिचेत् कथमेवं परमार्थतोनेकसंतानसिद्धिर्येनैकसंतानांतरे प्रवृत्तिरविसंवादिनी स्यात् । येषां पुनरेकानेका च वस्तुनः सत्ता तेषां सामान्यतो विशेषतश्च तथा संतानैकत्वनानात्वव्यवहारो न विरुध्यते । न च विशिष्टकार्यकारणोपाधिकयोः सत्ताविशेषयोः संतानयोः परस्परमुपकार्योपकारकभावाभावः शाश्वतत्वादिति युक्तं वक्तुं, कथंचिदशाश्वतत्वाविरोधात् । पर्यायार्थतः सर्वस्यानित्यत्वव्यवस्थितिः । ततः संतानिनामिव संतानयोः कथंचिदुपकार्योपकारकभावोऽभ्युपगंतव्य इति सिद्धमुभयात्मकयोरन्योन्यं साधनत्वं लिंगत्रितयनिमित्तं विघटयत्येव । न चैवमन्योन्याश्रयणं तयोरेकतरेण प्रसिद्धेनान्यतरस्याप्रसिद्धस्य साधनात् । तदुभयसिद्धौ कस्यचिदनुमानानुदयात् ॥

संप्रति परामितसंख्यांतरनियममनूद्य दूषयन्नाह;—

**यथाभूतमभूतस्य भूतं भूतस्य साधनम् । तथाभूतमभूतस्याभूतं भूतस्य चेष्यते ॥ २०५ ॥**
**नान्यथानुपपन्नत्वाभावे तदपि संगतम् । तद्भावे तु किमेतेन नियमेनाफलेन वः ॥ २०६ ॥**

न ह्यभूतादिलिंगचतुष्टयनियमो व्यवतिष्ठते भूताभूतोयं स्वभावस्यापि लिंगस्य तादृशि साध्ये संभवात् । न च तद्व्यवच्छेदमकुर्वन्नियमः सफलो नाम ॥

**सर्वहेतुविशेषाणां संग्रहो भासते यथा । तथा तद्भेदनियमे द्विभेदो हेतुरिष्यताम् ॥ २०७ ॥**
**संक्षेपादुपलंभश्चानुपलंभश्च वस्तुनः । परेषां तत्प्रभेदत्वात्तत्रांतर्भावसिद्धितः ॥ २०८ ॥**

उपलब्ध्यनुपलब्ध्योरेवेति सर्वहेतुविशेषाणामंतर्भावः प्रतिभासते संक्षेपात्तेषां तत्प्रभेदत्वादिति तदिष्टिः श्रेयसी । न हि कार्यादयः संयोग्यादयः पूर्ववदादयो वीतादयो वा हेतुविशेषास्ततो भिद्यंते तदप्रभेदत्वाप्रतीतेः ॥

**ननूपलभ्यमानत्वमुपलंभो यदीष्यते । तदा स्वभावहेतुः सद्व्यवहारप्रसाधने ॥ २०९ ॥**
**अथोपलभ्यते येन स तथा कार्यसाधनः । समानोनुपलंभेपि विचारोयं कथं न ते ॥ २१० ॥**

यद्युपलंभः कर्मसाधनस्तदा स्वभावहेतुरेव सद्व्यवहारे साध्ये करणसाधनमनुपलंभे ततः सोपि न स्वभावकार्यहेतुभ्यां भिन्नः स्यात् । कर्मसाधनत्वेनुपलभ्यमानत्वस्य स्वभावहेतुत्वात् । करणसाधनत्वेनुपलंभनस्य कार्यस्वभावयोर्विधिसाधनत्वादनुपलंभस्य प्रतिषेधविषयत्वादन्यस्ताभ्यामनुपलंभ इत्यसंगतं इत्याह—

**यथा चानुपलंभेन निषेधोर्थस्य साध्यते । तथा कार्यस्वभावाभ्यामिति युक्ता न तद्भिदा२११**

ननु च द्वौ साधनावेकः प्रतिषेधहेतुरित्यत्र द्वावेव वस्तुसाधनौ प्रतिषेधहेतुरेवैक इति नियम्यते न पुनर्द्वौ वस्तुसाधनावेव ताभ्यामन्यव्यवच्छेदस्यापि साधनात् । तथा नैक एव प्रतिषेधहेतुरित्यवधार्यते तत एव यतो लिंगत्रयनियमः संक्षेपान्न व्यवतिष्ठत इति न तद्विभेदो हेतुरिष्यते तस्याव्यवस्थानादित्यत्राह—

**निषेधहेतुरेवैक इत्ययुक्तं विधेरपि । सिद्धेरनुपलंभेनान्यव्यवच्छिद्विधिर्यतः ॥ २१२ ॥**

नास्तीह प्रदेशे घटादिरुपलब्धिलक्षणप्राप्तस्यानुपलब्धेरित्यनुपलंभेन यथा निषेध्यस्य प्रतिषेधस्तथा व्यवच्छेदस्य विधिरपि कर्तव्य एव । प्रतिषेधो हि साध्यस्ततोऽन्योऽप्रतिषेधस्तद्व्यवच्छेदस्य विधौ कथं प्रतिषेधः सिद्ध्येत् ? तद्विधौ वा कथं प्रतिषेधहेतुरेवैक इत्यवधारणं सुघटं गुणभावेन विधेरनुपलंभेन साधनात्प्राधान्येन प्रतिषेधस्यैव व्यवस्थापनात्सुघटं तथावधारणमिति चेत्, तर्हि द्वौ वस्तुसाधनावित्यवधारणमस्तु ताभ्यां वस्तुत एव प्राधान्येन विधानात् प्रतिषेधस्य गुणभावेन साधनात् । यदि पुनः प्रतिषेधोपि कार्यस्वभावाभ्यां प्राधान्येन साध्यते यथा नानग्निरत्र धूमात्, नावृक्षोऽयं शिंशपात्वादिति मतं तदानुपलंभेनापि विधिः प्रधानभावेन साध्यतां । यथास्त्यत्राग्निरनौष्ण्यानुपलब्धेरिति कथं निषेधसाधन एवैक इत्येकं संविधित्सोरन्यत्प्रच्यवते । ननु च नानग्निरत्र धूमादिति विरुद्धकार्योपलब्धिः प्रतिषेधस्य साधिका नावृक्षोयं शिंशपात्वादिति विरुद्धव्याप्तोपलब्धिश्च यावत्कश्चित्प्रतिषेधः स सर्वोनुपलब्धेरिति वचनात् । तथास्त्यत्राग्निरनौष्ण्यानुपलब्धेरित्ययमपि स्वभावहेतुरौष्ण्योपलब्धेरेव हेतुत्वात्प्रतिषेधद्वयस्य प्रकृतार्थसमर्थकत्वादिति न प्राधान्येन द्वौ प्रतिषेधसाधनौ । नाप्येको विधिसाधनो यतो दोषः स्यादिति कश्चित्, सोपि न प्रातीतिकाभिधायी कार्यस्वभावानुपलब्धिषु प्रतीयमानासु विपर्ययकल्पनात् । तथा-

हि—सर्वत्र कार्यस्वभावहेतोर्विरुद्धव्याप्तोपलब्धिरूपतापत्तेरनुपलब्धिरेवैका स्यात् अनुपलब्धेर्वा कार्यस्वभावहेतुतापत्तेस्तावेव स्यातां तत्र प्रतीत्यनुसरणे यथोपयोक्तमभिप्रायं कार्यस्वभावावपि प्राधान्येन विधिप्रतिषेधसाधनावुपेयौ । विधिसाधनश्चानुपलंभ इति न विषयभेदाल्लिंगसंख्यानियमः सिद्ध्येत् ॥

यस्मादनुपलंभोत्रानुपलभ्यत्वमिष्यते । तथोपलभ्यमानत्वमुपलंभः स्वरूपतः ॥ २१३ ॥
भिन्नावेतौ न तु स्वार्थाभेदादिति नियम्यते । भावाभावात्मकैकार्थगोचरत्वाविशेषतः ॥२१४

उपलभ्यत्वानुपलभ्यत्वस्वरूपभेदादेव भिन्नादुपलंभौ मंतव्यौ न पुनः स्वविषयभेदादिति नियम्यते विधिप्रतिषेधात्मकैकवस्तुविषयत्वस्य तयोर्विशेषाभावात् । यथैवेत्युपलंभेन प्राधान्याद्विधिर्गुणभावात् प्रतिषेधश्च विषयीक्रियते तथानुपलंभेनापि । यथानुपलंभेन प्रतिषेधः प्राधान्यात्, विधिश्च गुणभावात्तथोपलंभेनापीति यथायोग्यमुदाहरिष्यते । ततः संख्येयादुपलंभानुपलंभावेव हेतू प्रतिपत्तव्यौ ॥

तत्त्रेवोपलंभः स्यात्सिद्धः कार्यादिभेदतः । कार्योपलब्धिरग्न्यादौ धूमादिः सुविधानतः२१५
कारणस्योपलब्धिः स्याद्विशिष्टजलदोन्नतेः । वृष्टौ विशिष्टता तस्याश्रित्या छायाविशेषतः २१६
कारणानुपलंभेपि यथा कार्ये विशिष्टता । बोध्याभ्यासात्तथा कार्यानुपलंभेपि कारणे॥२१७॥
समर्थं कारणं तेन नांत्यक्षणगतं मतम् । तद्बोधे येन वैयर्थ्यमनुमानस्य गद्यते ॥ २१८ ॥
न चानुकूलतामात्रं कारणस्य विशिष्टता । येनास्य प्रतिबंधादिसंभवाद्व्यभिचारिता ॥ २१९ ॥
वैकल्यप्रतिबंधाभ्यामनासाद्य स्वभावताम् । विशिष्टतात्र विज्ञातुं शक्या छायादिभेदतः २२०
तद्विलोपेखिलख्यातव्यवहारविलोपनम् । तृप्त्यादिकार्यसिद्ध्यर्थमाहारादिप्रवृत्तितः ॥ २२१ ॥
हेतुना यः समग्रेण कार्योत्पादोनुमीयते । अर्थातरानपेक्षत्वात्स स्वभाव इतीरणे ॥ २२२ ॥
कार्योत्पादनयोग्यत्वे कार्ये वा शक्तकारणम् । स्वभावहेतुरित्यार्यैर्विचार्य प्रथमे मतः ॥२२३॥
स्वकार्ये भिन्नरूपैकस्वभावं कारणं वदेत् । कार्यस्यापि स्वभावत्वप्रसंगादविशेषतः ॥ २२४ ॥
समग्रकारणं कार्यस्वभावो न तु तस्य तत् । कोन्यो ब्रूयादिति ध्वस्तप्रज्ञानैरात्मवादिनः २२५
यत्स्वकार्याविनाभावि कारणं कार्यमेव तत् । कार्यं तु कारणं भावीत्येतदुन्मत्तभाषितम्॥२२६
परस्पराविनाभावात् कयाश्चित् (?) । हेतुतत्त्वव्यवस्थैवमन्योन्याश्रयणाज्जनैः ॥ २२७ ॥
रात्र्यादिदायकादृष्टविशेषस्यानुमापकम् । पाणिचक्रादि तत्कार्यं कथं वो भाविकारणम् ॥२२८
तत्परीक्षकलोकानां प्रसिद्धमनुमन्यताम् । कारणं कार्यवद्धेतुरविनाभावसंगतम् ॥ २२९ ॥

एवं कार्योपलब्धिं कारणोपलब्धिं च निश्चित्य संप्रत्यकार्यकारणोपलब्धिं विभिद्योदाहरन्नाह;—

कार्यकारणनिर्मुक्तवस्तुदृष्टिर्विवक्ष्यते । तत्स्वभावोपलब्धिश्च‥‥‥(?) निश्चिताः ॥ २३० ॥
कथंचित्साध्यतादात्म्यपरिणाममितस्य या । स्वभावस्योपलब्धिः स्यात्साविनाभावलक्षणा२३१
उत्पादादित्रयाक्रांतं समस्तं सत्त्वतो यथा । गुणपर्ययवद्द्रव्यं द्रव्यत्वादिति चोच्यते ॥ २३२ ॥
यथार्थस्य स्वभावोपलंभः सव्यवसायकः । (?) स्तस्यानुमानेन किं त्वयान्यत्प्रसाध्यते॥२३३॥
समारोपव्यवच्छेदस्तेनेत्यपि न युक्तिमत् । निश्चितेर्थे समारोपासंभवादिति केचन ॥ २३४ ॥
तदसद्वस्तुनोनेकस्वभावस्य विनिश्चिते । सत्त्वादावपि साध्यात्मनिश्चयान्नियमान्नृणाम् ॥२३५॥
निश्चितानिश्चितात्मत्वं न चैकस्य विरुध्यते । चित्रताज्ञानवज्ज्ञानास्वभावैकार्थसाधनात्॥२३६॥
तत एव न पक्षस्य प्रमाणेन विरोधनं । नापि वृत्तिर्विपक्षस्ते हेतोरेकांततश्च्युतेः ॥ २३७ ॥
उत्पादव्ययनिर्मुक्तं न वस्तु खरशृंगवत् । नापि ध्रौव्यपरित्यक्तं त्र्यात्मकं स्वार्थतत्त्वतः २३८

सहभावि गुणात्मत्वाभावे द्रव्यस्य तत्त्वतः । क्रमोत्पित्सु स्वपर्यायाभावत्वे च न कस्यचित् २३९
नाक्रमेण क्रमेणापि कार्यकारित्वसंगतिः । तदभावे कुतस्तस्य द्रव्यत्वं व्योमपुष्पवत् ॥२४०॥
एवं हेतुरयं शक्तः साध्यं साधयितुं ध्रुवं । सत्त्ववन्नियमादेव लक्षणस्य विनिश्चयात् ॥ २४१ ॥

तदियमकार्यकारणरूपस्य साध्यस्वभावस्योपलब्धिर्निश्चितोक्ता ।

साध्यादन्यस्योपलब्धिं पुनर्विभज्य निश्चिन्वन्नाह;—

साध्यादन्योपलब्धिस्तु द्विविधाप्यवसीयते । विरुद्धस्याविरुद्धस्य दृष्टेस्तेन विकल्पनात् ॥२४२॥

साध्यादन्यस्य हि तेन साध्येन विरुद्धस्योपलब्धिरविरुद्धस्य वा द्विधा कल्प्यते सा गत्यंतराभावात् । तत्र—

प्रतिषेधे विरुद्धोपलब्धिरर्थस्य तद्यथा । नास्त्येव सर्वथैकांतोनेकांतस्योपलंभतः ॥ २४३ ॥
यावत्कश्चिन्निषेधोत्र स सर्वोनुपलंभवान् । यत्तदेष विरुद्धोपलंभोस्त्वनुपलंभनम् ॥ २४४ ॥
इत्ययुक्तं तथाभूतश्रुतेरनुपलंभनं । तन्मूलत्वात्तथाभावे प्रत्यक्षमनुमास्तु ते ॥ २४५ ॥
तथैवानुपलंभेन विरोधे साधिते क्वचित् । स्यात्स्वभावविरुद्धोपलब्धिवृत्तिस्तथैव वा ॥ २४६ ॥
लिंगे प्रत्यक्षतः सिद्धे साध्यधर्मिणि वा क्वचित् । लिंगिज्ञानं प्रवर्तेत नान्यथातिप्रसंगतः २४७
गौणश्चेद्व्यपदेशोयं कारणस्य फलेस्तु नः । प्रधानभावतस्तस्य तत्राभिप्रायवर्तनात् ॥ २४८ ॥

स्वभावविरुद्धोपलब्धिं निश्चित्यानुपलब्धेरर्थांतरभूतां व्याप्यविरुद्धोपलब्धिमुदाहरति;—

व्यापकार्थविरुद्धोपलब्धिरत्र निवेदिता । यथा न सन्निकर्षादिः प्रमाणं परसंमतम् ॥ २४९ ॥
अज्ञानत्वादतिव्याप्तेर्ज्ञानत्वेन मितेरिह । व्यापकव्यापकद्विष्टोपलब्धिर्वेयमिष्यते ॥ २५० ॥
स्यात्साधकतमत्वेन स्वार्थज्ञप्तौ प्रमाणता । व्याप्ता या च तद्व्याप्तं ज्ञानात्मत्वेन साध्यते २५१

यदा प्रमाणत्वं ज्ञानत्वेन व्याप्तं साध्यतेऽज्ञानस्य प्रमाणत्वेतिप्रसंगात् तदा तद्विरुद्धस्याज्ञानत्वस्योपलब्धिर्व्यापकविरुद्धोपलब्धिर्बोध्या न सन्निकर्षादिरचेतनः प्रमाणमज्ञानत्वादिति । यदा तु प्रमाणत्वं साधकतमत्वेन व्याप्तं तदपि ज्ञानात्मकत्वेन व्याप्तं साध्यते साधकतमस्य प्रमाणतानुपपत्तेरज्ञानात्मकस्य च स्वार्थप्रमितौ साधकतमत्वायोगात् । छिदिक्रियादावेवाज्ञानात्मनः परश्वादेः साधकतमोपपत्तेः । तदा व्यापकव्यापकविरुद्धोपलब्धिः सैवोदाहर्तव्या ॥

व्यापकद्विष्ठकार्योपलब्धिः कार्योपलब्धिगा । श्रुतिप्राधान्यतः सिद्धा पारंपर्याद्विरुद्धवत् ॥२५२
यथा नात्मा विभुः काये तत्सुखाद्युपलब्धितः । विभुत्वं सर्वभूतार्थसंबंधित्वेन वस्तुतः २५३
व्याप्तं तेन विरोधीदं कायसंबंधमात्रकं । काय एव सुखादीनां तत्कार्याणां विबोधनम् ॥२५४॥
ननु प्रदेशवृत्तीनां तेषां संवादनं कथं । शरीरमात्रसंबंधमात्मनो भावयेत्सदा ॥ २५५ ॥
यतो निःशेषमूर्तार्थसंबंधविनिवर्तनात् । विभुत्वाभावसिद्धिः स्यादिति केचित्प्रचक्ष्यते ॥२५६॥
तदयुक्तं मनीषायाः साकल्येनात्मनः स्थितेः । तच्छून्यस्यात्मताहानेस्तादात्म्यस्य प्रसाधनात् ॥

यद्यपि शिरसि मे सुखं पादे मे वेदनेति विशेषतः प्रदेशवृत्तित्वं सुखादीनामनुभूयते तदनुभवविशेषाणां च तथापि ज्ञानसामान्यस्य सर्वात्मद्रव्यवृत्तित्वमेव, ज्ञानमात्रशून्यस्यात्मविरोधादतिप्रसक्तेरिति साधितं उपयोगात्मसिद्धौ । ततो युक्तेयं व्यापकविरुद्धकार्योपलब्धिः ॥

विरुद्धकार्यसंसिद्धिर्नास्त्येकांतेनपेक्षिण्य- । नेकांतेर्थक्रियादृष्टेरित्येवमवगम्यते ॥ २५८ ॥

निरपेक्षैकांतेन ह्यनेकांतो विरुद्धस्तत्कार्यमर्थक्रियानुपलब्धिर्निषेधस्याभावं साधयति ॥

कारणार्थविरुद्धानुपलब्धिर्ज्ञायते यथा । नास्ति मिथ्याचरित्रं मे सम्यग्विज्ञानवेदनात् २५९

**तद्धि मिथ्याचरित्रस्य कारणं विनिवर्तयेत् । मिथ्याज्ञाननिवृत्तिस्तु तस्य तद्विनिवर्तिका २६०**

ननु च सम्यग्विज्ञानान्मिथ्याज्ञाननिवृत्तिर्न मिथ्याचारित्रस्य निवृत्तिका प्रादुर्भूतसम्यग्ज्ञानस्यापि पुंसोऽचारित्रप्रसिद्धेः पूर्वस्य लाभे भजनीयमुत्तरमिति वचनादन्यथा तद्व्याघातादिति चेन्न, मिथ्याचारित्रस्य मिथ्यागमादिज्ञानपूर्वस्य पंचाग्निसाधनादेर्निषेधत्वात् । चारित्रमोहोदये सति निवृत्तिपरिणामाभावलक्षणस्याचारित्रस्य तु निषेध्यत्वानिष्टेर्मोहोदयमात्रापेक्षित्वस्य तु द्वयोरप्यचारित्रमिथ्याचारित्रयोरभेदेन वचनमागमे व्यवस्थितिविरुद्धमेव मिथ्यादर्शने मिथ्याचारित्रस्यांतर्भावाच्च मिथ्याज्ञानवत् ॥

**कारणद्विष्ठकार्योपलब्धिर्याथात्म्यवाकृतः । तस्य तेनाविनाभावात् पारंपर्येण तत्त्वतः ॥२६१॥**

नास्ति मिथ्याचारित्रमस्य याथात्म्यवाक्कृदिति कारणविरुद्धकार्योपलब्धिः । मिथ्याचारित्रस्य हि निषेधस्य कारणं मिथ्याज्ञानं तेन विरुद्धं सम्यग्ज्ञानस्य कार्यं याथात्म्यवचनं तन्निर्माय सुविवेचितं निषेध्याभावं साधयत्येव व्यभिचाराभावात् ॥

**कारणव्यापकद्विष्ठोपलब्धिर्नास्ति निर्वृतिः । सांख्यादेर्ज्ञानमात्रोपगमादिति यथेक्ष्यते ॥२६२॥**
**निर्वृतेः कारणं व्याप्तं दृष्ट्यादित्रितयात्मना । तद्विरुद्धं तु विज्ञानमात्रं सांख्यादिसम्मतम्२६३**

न हीयं कारणव्यापकविरुद्धोपलब्धिरसिद्धा निषेध्यस्य निर्वाणस्य हेतोर्व्यापकस्य सम्यग्दर्शनादित्रयात्मकत्वस्य निश्चयात् तद्विरुद्धस्य ज्ञानमात्रात्मकत्वस्य सांख्यादिभिः स्वयं संमनत्वात् ॥

**कारणव्यापकद्विष्ठकार्यदृष्टिस्तु तद्वचः । सम्यग्विवेचितं साध्याविनाभावि प्रतीयते ॥२६४॥**

सांख्यादेर्नास्ति निर्वाणं ज्ञानमात्रवचनश्रवणादिति कारणव्यापकविरुद्धकार्योपलब्धिः प्रत्येया सुविवेचितस्य कार्यस्य साध्याविनाभावसिद्धेः ॥

**द्रष्टा सहचरद्विष्ठोपलब्धिस्तद्यथा मयि । नास्ति मत्याद्यविज्ञानं तत्त्वश्रद्धानसिद्धितः ॥२६५॥**
**सहचारिनिषेधेन मिथ्याश्रद्धानमीक्षितम् । तन्निहंत्येव तद्धातितत्त्वश्रद्धानमंजसा ॥ २६६ ॥**
**तदभावे च मत्याद्यविज्ञानं विनिवर्तते । मतिज्ञानादिभावेन तदास्य परिणामतः ॥ २६७ ॥**

सहचरविरुद्धोपलब्धिरपि हि गमिका प्रतीयते इति प्रसिद्धासौ ।

**तथा सहचरद्विष्ठकार्यसिद्धिर्निवेदिता । प्रशमादिविनिर्णीतेस्तत्रास्मास्विति साधने ॥ २६८ ॥**
**तस्मिन् सहचरव्यापि विरुद्धस्योपलंभनम् । सद्दर्शनत्वनिर्णीतेरिति तज्ज्ञैरुदाहृतम् ॥ २६९ ॥**
**तदेतत्सहचरव्यापि द्विष्ठकार्योपलंभनम् । प्रमाणादिप्रतिष्ठानसिद्धेरिति निबुध्यताम् ॥२७०॥**
**सहचारिनिमित्तेन विरुद्धस्योपलंभनं । तन्नास्त्यस्मासु दृग्मोहः प्रतिपक्षोपलंभतः ॥ २७१ ॥**

यथेयं सहचरविरुद्धोपलब्धिर्नास्ति मयि मत्याद्यज्ञानं तत्त्वश्रद्धानोपलब्धेरिति तथा सहचरविरुद्धकार्योपलब्धिः प्रशमादिनिश्चितेरिति सहचरव्यापकविरुद्धोपलब्धिः सद्दर्शनत्वनिश्चितेरिति सहचरव्यापकविरुद्धकार्योपलब्धिः प्रमाणादिव्यवस्थोपलब्धेरिति सहचरकारणविरुद्धोपलब्धिर्दर्शनमोहप्रतिपक्षपरिणामोपलब्धेरिति निबुध्यतां मत्याद्यज्ञानलक्षणनिषेध्याभावाविनाभावप्रतीतेरविशेषात् ॥

**इत्येवं तद्विरुद्धोपलब्धिभेदाः प्रतीतिगाः । यथायोगमुदाहार्याः स्वयं तत्त्वपरीक्षकैः ॥२७२॥**

इत्येवं निषिद्धे विरुद्धोपलब्धिभेदाश्चतुर्दशोदाहृताः प्रतीतिमनुसरंति कार्यकारणस्वभावोपलब्धिभेदत्रयवत्ततो यथायोगमन्यान्युदाहरणानि लोकसमयप्रसिद्धानि परीक्षकैरुपदर्शनीयानि प्रतीतिदार्ढ्योपपत्तेः ॥

संप्रति साध्येनाविरुद्धस्याकार्यकारणेनार्थस्योपलब्धिभेदान् विभज्य प्रदर्शयन्नाह;—

**साध्यार्थेन विरुद्धस्य कार्यकारणभेदिनः । उपलब्धिस्त्रिधाम्नाता प्राक्सहोत्तरचारिणः ॥२७३**

तत्र पूर्वचरस्योपलब्धिः सिद्धांतवेदिनाम् । यथोदेष्यति नक्षत्रं शकटं कृत्तिकोदयात् ॥२७४॥
पूर्वचारितनिःशेषं कारणं नियमादपि । कार्यात्मलाभहेतूनां कारणत्वप्रसिद्धितः ॥ २७५ ॥
न रोहिण्युदयस्तु स्यादमुष्मिन् कृत्तिकोदयात् । तदनंतरसंधित्वाभावात्कालांतरेक्षणात् ॥२७६
विशिष्टकालमासाद्य कृत्तिकाः कुर्वते यदि । शकटं भरणिः किं न तत्करोति तथैव च २७७
व्यवधानादहेतुत्वे तस्यास्तत्र क्व वासना । स्मृतिहेतुर्विभाव्येत तत्त एवेत्यवर्तिनम् ॥ २७८ ॥
कारणं भरणिस्तत्र कृत्तिकासहकारिणी । यदि कालांतरापेक्षा तथा स्यादश्विनी न किम् २७९
पितामहः पिता किं न तथैव प्रपितामहः । सर्वो वानादिसंतानः सूनोः पूर्वत्वयोगतः २८०
स्वरूपलाभहेतोश्चेत् पितृत्वं नेतरस्य तु । प्राक् शकटस्य मा भूवन् कृत्तिकाहेतवस्तथा ॥२८१॥
पूर्वपूर्वचरादीनामुपलब्धिः प्रदर्शिता । पूर्वाचार्योपलंभेन ततो नार्थांतरं मतम् ॥ २८२ ॥
सहचार्युपलब्धिः स्यात्कायश्चैतन्यवानयम् । विशिष्टस्पर्शसंसिद्धेरिति कैश्चिदुदाहृतम् ॥ २८३ ॥
कार्ये हेतुरयं स्वेष्टः समानसमयत्वतः । स्वातंत्र्येण व्यवस्थानाद्वामदक्षिणशृंगवत् ॥ २८४ ॥
एकसामग्र्यधीनत्वात्तयोः स्यात्सहभाविता । क्वान्यथा नियमस्तस्यास्ततोन्येषामितीति चेत् २८५
नैकद्रव्यात्मतत्त्वेन विना तस्या विरोधतः । सामग्र्येका हि तद्द्रव्यं रसरूपादिषु स्फुटम् २८६
न च तस्यानुमासाध्यमानाद्रसविशेषतः । समानसमयस्यैव रूपादेरनुमानतः ॥ २८७ ॥
कार्येण कारणस्यानुमानं येनेदमुच्यते । कारणेनापि रूपादेस्ततो द्रव्येण नानुमा ॥ २८८ ॥
समानकारणत्वं तु सामग्र्येका यदीष्यते । पयोरसात्सरोजन्मरूपस्यानुमितिर्न किम् ॥ २८९ ॥
यथैव हि पयोप(?)रूपाद्रससहायकात् । तथा सरोरुहवेपीति स्यात्समाननिमित्तता ॥ २९० ॥
प्रत्यासत्तेरभावाच्चेत्साध्यसाधनतानयोः । नष्टैकद्रव्यतादात्म्यात् प्रत्यासत्तिः परा च सा २९१
नन्वर्थांतरभूतानामहेतुफलनाश्रिताम् । सहचारित्वमर्थानां कुतो नियतमीक्ष्यसे ॥ २९२ ॥
कार्यकारणभावास्ते कस्मादिति समं न किम् । तथा संप्रत्ययात्तुल्यं समाधानमपीदृशं ॥२९३॥
स्वकारणात्तथाग्निश्चेज्जातो धूमस्य कारकः । चैतन्यसहकार्यस्तु स्पर्शोंगे तददृष्टतः ॥ २९४ ॥
दृष्टाद्धेतोर्विना येर्थो नियमात्सहचारिणः । अदृष्टकरणं तेषां किंचिदित्यनुमीयते ॥ २९५ ॥
द्रव्यतोऽनादिरूपाणां स्वभावोस्तु न तादृशः । साध्यसाधनतैवैषां तत्कृतान्योन्यमित्यसत् २९६
ये चार्वाक्परभागाद्या नियमेन परस्पराः । सहभावमितास्तेषां हेतुरेतेन वर्णितः ॥ २९७ ॥
ततोतीतैककालानां गतिः किंकार्यलिंगजा । नियमादन्यथा दृष्टिः सहचार्यादसिद्धितः ॥२९८
तथोत्तरचरस्योपलब्धिस्तज्ज्ञैरुदाहृता । उदगाद्भरणिराग्नेयदर्शनान्नभसीति सा ॥ २९९ ॥
सर्वमुत्तरचारीह कार्यमित्यनिराकृतेः । नाना प्राणिगणादृष्टात्सातेतरफलाद्विना ॥ ३०० ॥
पूर्वोत्तरचराणि स्युर्भानि क्रमभुवः सदा । नान्योन्यं हेतुता तेषां कार्याबाधा ततो मता ३०१
साध्यसाधनता न स्यादविनाभावयोगतः ।

तदेवं सहचरोपलब्ध्यादीनां कार्यस्वभावानुपलब्धिभ्योन्यत्वभाजां व्यवस्थापनात्ततोन्ये हेत्वाभासा एवेति न वक्तव्यं सौगतैरित्युपदर्शयति;—

पक्षधर्मस्तदंशेन व्याप्तो हेतुस्त्रिधैव सः । अविनाभावनियमादिति वाच्यं न धीमता ॥ ३०२ ॥
पक्षधर्मात्यये युक्ताः सहचार्यादयो यतः । सत्यं च हेतवो नातो हेत्वाभासास्तथापरे ॥३०३॥
त्रिधैव वाविनाभावानियमाद्धेतुरास्थितः । कार्यादिर्नान्य इत्येषा व्याख्यैतेन निराकृता ॥३०४

तदेवं कस्यचिदर्थस्य विधौ प्रतिषेधोपलब्धिभेदानभिधाय संप्रति निषेधेनुपलब्धिप्रपंचं निश्चिन्वन्नाह;—

**निषेधेनुपलब्धिः स्यात्फलहेतुद्वयात्मना । हेतुसाध्याविनाभावनियमस्य विनिश्चयात् ॥३०५॥**

निषेधेनुपलब्धिरेवेति नावधारणीयं विरुद्धोपलब्ध्यादेरपि तत्र प्रवृत्तिः निषेध एवानुपलब्धिरित्यवधारणे तु न दोषः प्रधानेन विधौ तदप्रवृत्तेः । सा च कार्यकारणानुभयात्मनामवबोद्धव्या ॥

**तत्र कार्याप्रसिद्धिः स्यान्नास्ति चिन्मृतविग्रहे । वाक्क्रियाकारभेदानामसिद्धेरिति निश्चिता ३०६**

ननु वागादिष्वप्रतिबद्धसामर्थ्याया एव चितो नास्तित्वं वचनानुपलब्धेः सिध्येन्न तु प्रतिबद्धसामर्थ्याया विद्यमानाया अपि वागादिकार्ये व्यापारासंभवान्नावश्यं कारणानि कार्यं चिति भवंति प्रतिबंधवैकल्यसभवे कस्यचित्कारणस्य स्वकार्याकरणदर्शनात्ततो नेयं कार्यानुपलब्धिर्गमिका चिन्मात्राभावसिद्धाविति कश्चित् । तथापि संबंधकार्याभावात्कथं नित्यात्माद्यभावसिद्धिरिति स्वमतव्याहतिरुक्ता । ततः स्वसंताने संतानांतरं वर्तमानक्षणे क्षणांतरं संविदद्वये वेद्याकारभेदं वा तत्कार्यानुपलब्धेरसत्वेन साधयत्कार्यानुपलब्धेरन्यथानुपपत्तिसामर्थ्यानिश्चयाद्गमकत्वमभ्युपगंतुमर्हत्येव । स्वभावानुपलब्धेस्तु तादृशेनिष्टे प्रकृतकार्यानुपलब्धौ पुनरन्यथानुपपन्नत्वसामर्थ्यनिश्चयो लोकस्य स्वत एवात्यंताभ्यासात्तादृशं लोको विवेचयतीति प्रसिद्धेस्ततः साधीयसी कार्यानुपलब्धिः ॥

**कारणानुपलब्धिस्तु नार्थिताचरणं शुभम् । सम्यग्बोधोपलंभस्याभावादिति विभाव्यते॥३०७॥**

सम्यग्बोधो हि कारणं सम्यक्चारित्रस्य तदनुपलब्धितः स्वसंताने तदभावं साधयति कुतश्चिदुपजातस्य विभ्रमस्यान्यथा विच्छेदायोगात् ॥

**अहेतुफलरूपस्य वस्तुनोनुपलंभनम् । द्वेधा निषेध्य तादात्म्येतरस्यादृष्टिकल्पनात् ॥ ३०८ ॥**
**तत्राभिन्नात्मनोः सिद्धिर्द्विविधा संप्रतीयते । स्वभावानुपलब्धिश्च व्यापकादृष्टिरेव च ॥३०९॥**
**आद्या यथा न मे दुःखं विषादानुपलंभतः । व्यापकानुपलब्धिस्तु वृक्षादृष्टेर्न शिंशपा॥३१०॥**
**कार्यकारणभिन्नस्यानुपलब्धिर्न बुध्यताम् । सहचारिण एवात्र प्रतिषेधेन वस्तुना ॥ ३११ ॥**
**मयि नास्ति मतिज्ञानं सद्दृष्ट्यनुपलब्धितः । रूपादयो न जीवादौ स्पर्शासिद्धेरितीयताम्३१२**

सैवमनुपलब्धिः पंचविधोक्ता श्रुतिप्राधान्यात् । ननु कारणव्यापकानुपलब्धयोपि श्रूयमाणाः संति । सत्यं । तास्त्वत्रैवांतर्भावमुपयातीत्याह;—

**कारणव्यापकदृष्टिप्रमुखाश्चास्य दृष्टयः । तत्रांतर्भावमायांति पारंपर्यादनेकधा ॥ ३१३ ॥**

काः पुनस्ता इत्याह;—

**प्राणादयो न संत्येव भस्मादिषु कदाचन । जीवत्वासिद्धितो हेतुव्यापकादृष्टिरीदृशी ॥३१४॥**
**कश्चिदात्मनि संसारप्रसूतिर्नास्ति कार्त्स्न्यतः । सर्वकर्मोदयाभावादिति वा समुदाहृता ॥३१५॥**
**तद्धेतुहेत्वदृष्टिः स्यान्मिथ्यात्वाद्यप्रसिद्धितः । तन्निवृत्तौ हि तद्धेतुकर्माभावात्क संसृतिः ३१६**
**तत्कार्यव्यापकासिद्धिर्यथा नास्ति निरन्वयं । तत्त्वं क्रमाक्रमाभावादन्वयैकांततत्त्ववत् ॥३१७॥**
**तत्कार्यव्यापकस्यापि पदार्थानुपलंभनं । परिणामविशेषस्याभावादिति विभाव्यताम् ॥३१८॥**
**कारणव्यापका दृष्टिः सांख्यादेर्नास्ति निर्वृतिः । सद्दृष्ट्यादित्रयासिद्धेरियं पुनरुदाहृता ३१९**
**कारणव्यापका व्याप्तिः स्वभावानुपलंभनं । तत्रैव परिणामस्यासिद्धेरिति यथोच्यते ॥ ३२० ॥**
**परिणामनिवृत्तौ हि तद्व्याप्तं विनिवर्तते । सद्दृष्ट्यादित्रयं मार्गे व्यापकं पूर्ववत्परम् ॥ ३२१ ॥**
**सहचारिफला दृष्टिर्मत्यज्ञानादि नास्ति मे । नास्तिक्याध्यवसानादेरभावादिति दर्शिता ३२२**
**नास्तिक्यपरिणामो हि फलं मिथ्यादृशः स्फुटम् । सहचारितया मत्यज्ञानादिवद्विपश्चिताम्३२३**

**सहचारिनिमित्तस्यानुपलब्धिरुदाहृता । दृष्टिमोहोदयासिद्धेरिति व्यक्तं तथैव हि ॥ ३२४ ॥**
**सहभूव्यापका दृष्टिर्नास्ति वेदकदर्शनैः । सहभावि मतिज्ञानं तत्त्वश्रद्धानहानितः ॥ ३२५ ॥**
**सहभूव्यापि हेत्वाद्यदृष्टयोप्यविरोधतः । प्रत्येतव्याः प्रपंचेन लोकशास्त्रनिदर्शनैः ॥ ३२६ ॥**

सहचरव्यापककार्यानुपलब्धिर्यथा नास्त्यभव्ये सम्यग्विज्ञानं दर्शनमोहोपशमाद्यभावात् । सहचरव्यापककारणानुपलब्धिर्यथा तत्रैवाधःप्रवृत्तादिकरणकाललब्ध्याद्यभावात् । सहचरव्यापककारणव्यापकानुपलब्धिस्तत्रैव दर्शनमोहोपशमादित्वाभावादिति समयप्रसिद्धान्युदाहरणानि । लोकप्रसिद्धानि पुनर्नाश्वस्य दक्षिणं शृंगं शृंगारंभकाभावादिति सहचरव्यापककारणानुपलब्धिः । दक्षिणशृंगसहचारिणो हि वामशृंगस्य व्यापकं शृंगमात्रं तस्य कारणं तदारंभकाः पुद्गलविशेषाः तदनुपलब्धिर्दक्षिणशृंगस्याभावं साधयत्येव । सहचरव्यापककारणकारणानुपलब्धिस्तत्रैव शृंगारंभकपुद्गलसामान्याभावादिति प्रतिपत्तव्यानि ॥

**उपलब्ध्यनुपलब्धिभ्यामित्येवं सर्वहेतवः । संगृह्यंते न कार्यादित्रितयेन कथंचन ॥ ३२७ ॥**
**नापि पूर्ववदादीनां त्रितयो न निषेधने । साध्ये तस्यासमर्थत्वाद्विधा चैव प्रयुक्तितः॥३२८॥**

ननु च कार्यस्वभावानुपलब्धिभिः सर्वहेतूनां संग्रहो मा भूत् सहचरादीनां तत्रांतर्भावयितुमशक्तेः । पूर्ववदादिभिस्तु भवत्येवं विधौ निषेधे च पूर्ववतः परिशेषानुमानस्य सामान्यतो दृष्टस्य च प्रवृत्तिविरोधात्सहचरादीनामपि तत्रांतर्भावयितुमशक्यत्वात् । ते हि पूर्ववदादिलक्षणयोगमनतिक्रामंतो न ततो भिद्यंत इति कश्चित् । सोपि यदि पूर्ववदादीनां साध्याविरुद्धानामुपलब्धिं विधौ प्रयुंजीत निषेध्यं विरुद्धानां च प्रतिषेधे निषेध्यस्वभावकारणादीनां त्वनुपलब्धिं तदा कथमुपलब्ध्यनुपलब्धिभ्यां सर्वहेतुसंग्रहं नेच्छेत् ॥

**पूर्ववत्कारणात्कार्येनुमानमनुमन्यते । शेषवत्कारणे कार्याद्विज्ञानं नियतस्थितेः ॥ ३२९ ॥**
**कार्यकारणनिर्मुक्तादर्थात्साध्ये तथाविधे । भवेत्सामान्यतो दृष्टमिति व्याख्यानसंभवे॥३३०॥**
**विधौ तदुपलंभः स्युर्निषेधेनुपलब्धयः । ततश्च षड्विधो हेतुः संक्षेपात्केन वार्यते ॥ ३३१ ॥**

अत्र निषेधेनुपलब्धय एवेति नावधार्यते स्वभावविरुद्धोपलब्ध्यादीनामपि तत्र व्यापारात् तत एव विधावेवोपलब्धय इति नावधारणं श्रेय इत्युक्तप्रायं । एतेन प्राग्व्याख्यानेपि पूर्ववदादीनामुपलब्धयस्त्रिस्रोनुपलब्धयश्चेति संक्षेपात् षड्विधो हेतुरनिवार्यत इति निवेदितं । अतिसंक्षेपाद्विशेषतो द्विविध उच्यते सामान्यादेक एवान्यथानुपपत्तिनियमलक्षणोर्थ इति न किंचिद्विरुद्धमुत्पश्यामः ॥ षड्विधो हेतुः कुतो न निवार्यत इत्याह;—

**केवलान्वयसंयोगी वीतभूतादिभेदतः । विनिर्णीताविनाभावहेतूनामत्र संग्रहात् ॥ ३३२ ॥**

न हि केवलान्वयिकेवलव्यतिरेक्यन्वयव्यतिरेकिणः संयोगिसमवायिविरोधिनो वा वीतावीततदुभयस्वभावा वा भूतादयो वा कार्यकारणानुभवोपलंभनातिक्रमं नियता नियतहेतुभ्योन्ये भवेयुरविनाभावनियमलक्षणयोगिनां तेषां तत्रैवांतर्भवनादिति प्रकृतमुपसंहरन्नाह ॥

**अन्यथानुपपत्त्येकलक्षणं साधनं ततः । सूक्तं साध्यं विना सद्भिः शक्यत्वादिविशेषणं ३३३**

एवं हि यैरुक्तं "साध्यं शक्यमभिप्रेतमप्रसिद्धं ततोपरं । साध्याभासं विरुद्धादिसाधनाविषयत्वतः ॥" इति तैः सूक्तमेव, अन्यथानुपपत्त्येकलक्षणसाधनविषयस्य साध्यत्वप्रतीतेस्तदविषयस्य प्रत्यक्षादिविरुद्धस्य प्रसिद्धस्यानभिप्रेतस्य वा साधयितुमशक्यस्य साध्याभासत्वनिर्णयात् । तत्र हि—

**शक्यं साधयितुं साध्यमित्यनेन निराकृतः । प्रत्यक्षादिप्रमाणेन पक्ष इत्येतदास्थितम् ॥३३४॥**

तेनानुष्णोग्निरित्येष पक्षः प्रत्यक्षबाधितः । धूमोनग्निज एवायमिति लैंगिकबाधितः ॥३३५॥
प्रेत्यासुखप्रदो धर्म इत्यागमनिराकृतः । नृकपालं शुचीति स्याल्लोकरूढिप्रबाधितः ॥ ३३६ ॥
पक्षाभासः स्ववाग्बाध्यः सदा मौनव्रतीति यः । स सर्वोपि प्रयोक्तव्यो नैव तत्त्वपरीक्षकैः ३३७
शब्दक्षणक्षयैकांतः सत्त्वादित्यत्र केचन । दृष्टांताभावतोशक्यः पक्ष इत्यभ्यमंसत ॥ ३३८ ॥
तेषां सर्वमनेकांतमिति पक्षो विरुध्यते । तत एवोभयोः सिद्धो दृष्टांतो न हि कुत्रचित् ३३९
प्रमाणबाधितत्वेन साध्याभासत्वभाषणे । सर्वस्तथेष्ट एवेह सर्वथैकांतसंगरः ॥ ३४० ॥
तथा साध्यमभिप्रेतमित्यनेन निवार्यते । अनुक्तस्य स्वयं साध्याभावाभावः परोदितः॥३४१॥
यथा ह्युक्तो भवेत्पक्षस्तथानुक्तोपि वादितः । प्रस्तावादिबलात्सिद्धः सामर्थ्यादुक्त एव चेत्३४२
स्वागमोक्तोपि किं न स्यादेव पक्षः कथंचन । तथानुक्तोपि चोक्तो वा साध्यः स्वेष्टोस्तु तात्त्विकः ॥
नानिष्टोतिप्रसंगस्य परिहर्तुमशक्तितः । ननु नेच्छति वादीह साध्यं साधयितुं स्वयम् ॥३४४॥
प्रसिद्धस्यान्यसंवित्तिकारणापेक्ष्यवर्तनात् । प्रतिवाद्यपि तस्यैतन्निराकृतिपरत्वतः ॥ ३४५ ॥
सत्या नोभयसिद्धान्तवेदिनः पक्षपातिनः । इत्ययुक्तमवक्तव्यमभिप्रेतविशेषणम् ॥ ३४६ ॥
जिज्ञासितविशेषत्वमिवान्ये संप्रचक्षते । तदसद्वादिनेष्टस्य साध्यत्वाप्रतिघातितः ॥ ३४७ ॥
स्वार्थानुमासु पक्षस्य तन्निश्चयविवेकतः । परार्थेष्वनुमानेषु परो बोधयितुं स्वयम् ॥ ३४८ ॥
किं नेष्टस्येह साध्यत्वं विशेषानभिधानतः । इष्टः साधयितुं साध्यः स्वपरप्रतिपत्तये ॥३४९॥
इति व्याख्यानतो युक्तमभिप्रेतविशेषणं । अप्रसिद्धं तथा साध्यमित्यनेनाभिधीयते ॥ ३५० ॥
तस्यारेका विपर्यासा व्युत्पत्तिविषयात्मता । तस्य तद्व्यवच्छेदत्वात्सिद्धिरर्थस्य तत्त्वतः ॥३५१
ततो न युज्यते वक्तुं व्यस्तो हेतोरपाश्रयः । संशयो ह्यनुमानेन यथा विच्छिद्यते तथा॥३५२॥
अव्युत्पत्तिविपर्यासावन्यथा निर्णयः कथं । अव्युत्पन्नविपर्यस्तौ नाचार्यमुपसर्पतः ॥ ३५३ ॥
क्वचिदेव यथा तद्वत्संशयात्मापि कश्च नः । नावश्यं निर्णयाकांक्षा संदिग्धस्याप्यनर्थिनः३५४
संदेहमात्रकास्थानात्स्वार्थसिद्धौ प्रवर्तनात् । यथाप्रवर्तमानस्य संदिग्धस्य प्रवर्तनम् ॥ ३५५ ॥
विधीयतेनुमानेन तथा किं न निषिध्यते । अव्युत्पन्नविपर्यस्तमनसोप्यप्रवर्तनम् ॥ ३५६ ॥
परानुग्रहवृत्तीनामुपेक्षानुपपत्तितः । अविनेयिषु माध्यस्थ्यं न चैवं प्रतिहन्यते ॥ ३५७ ॥
रागद्वेषविहीनत्वं निर्गुणेषु हि तेषु नः । स्वयं माध्यस्थ्यमालंब्य गुणदोषोपदेशना ॥३५८॥
कार्या तेभ्योपि धीमद्भिस्तद्विनेयत्वसिद्धये । अव्युत्पन्नविपर्यस्ता प्रतिपाद्यत्वनिश्चये ॥ ३५९॥
प्रतिपाद्यः कथं नाम दुष्टोज्ञः स्वसुतो जनैः । लौकिकस्याप्रबोध्यत्वे कथमस्तु परीक्षकः ३६०
प्रबोध्यस्तस्य यत्नेन क्रमतस्तत्त्वसंभवात् । प्रतिपाद्यस्ततस्त्रेधा पक्षस्तत्प्रतिपत्तये ॥ ३६१ ॥
संदिग्धादिः प्रयोक्तव्योऽप्रसिद्ध इति कीर्तनात् । सुप्रसिद्धश्च विक्षिप्तः पक्षोऽकिंचित्करत्वतः३६२
तत्र प्रवर्तमानस्य साधनस्य स्वरूपवत् । समारोपे तु पक्षत्वं साधनेपि न वार्यते ॥ ३६३ ॥
स्वरूपेणैव निर्दिश्यस्तथा सति भवत्यसौ । जिज्ञासितविशेषस्तु धर्मी यैः पक्ष इष्यते ॥३६४॥
तेषां संति प्रमाणानि स्वेष्टसाधनतः कथं । धर्मिण्यसिद्धरूपेपि हेतुर्गमक इष्यते ॥ ३६५ ॥
अन्यथानुपपन्नत्वं सिद्धं सद्भिरसंशयं । धर्मिसंतानसाध्याश्चेत् सर्वे भावाः क्षणक्षयाः ॥३६६॥
इति पक्षो न युज्येत हेतोस्तद्धर्मतापि च । प्रत्यक्षेणाप्रसिद्धत्वाद्धर्मिणामिह कार्त्स्न्यतः॥३६७॥
अनुमानेन तत्सिद्धौ धर्मिसत्ताप्रसाधनं । परप्रसिद्धितस्तेषां धर्मित्वं हेतुधर्मवत् ॥ ३६८ ॥
ध्रुवं तेषां स्वतंत्रस्य साधनस्य निषेधकं । प्रसंगसाधनं चेच्छेत्तत्र धर्मिग्रहः कुतः ॥ ३६९ ॥

**इति धर्मिण्यसिद्धेपि साधनं मतमेव च । व्याप्यव्यापकभावे हि सिद्धे साधनसाध्ययोः ३७०**
**प्रसंगसाधनं प्रोक्तं तत्प्रदर्शनमात्रकं । अथ निःशेषशून्यत्ववादिनं प्रति तार्किकैः ॥ ३७१ ॥**
**विरोधोद्भावनं स्वेष्टे विधीयेतेति संमतं । तदप्रमाणकं तावदकिंचित्करमीक्ष्यते ॥ ३७२ ॥**
**सप्रमाणकता तस्य क्व प्रमाणाप्रसाधने । नन्विष्टसाधनात् संति प्रमाणानीति भाषणे ॥३७३॥**
**समः पर्यनुयोगोयं प्रमाशून्यत्ववादिनः । तदिष्टसाधनं तावदप्रमाणमसाधनम् ॥ ३७४ ॥**
**स्वसाध्येन प्रमाणं तु न प्रसिद्धं द्वयोरपि । तदसंगतमिष्टस्य संविन्मात्रस्य साधनम् ॥ ३७५ ॥**
**स्वयं प्रकाशनं ध्वस्तव्यभिचारं हि सुस्थितं । स्वसंवेदनमध्यक्षं वादिनो मानमंजसा ॥ ३७६ ॥**
**ततोन्येषां प्रमाणानामस्तित्वस्य व्यवस्थितिः । नन्विष्टसाधनं धर्मिप्रमाणैरपरैर्युतम् ॥ ३७७ ॥**
**तदिष्टसाधनत्वस्येतरथानुपपत्तितः । एवं प्रयोगतः सिद्धिः प्रमाणानामनाकुलम् ॥ ३७८ ॥**
**तत्सत्ता नैव साध्या स्यात्सर्वत्रेति परे विदुः । यतोभयं तदेवैषां स्वयमग्रे व्यवस्थितम् ॥३७९**
**हेतोरनन्वयत्वस्य प्रसंजनमसंशयं । सत्तायां हि प्रसाध्यायां विशेषस्यैव साधनात् ॥ ३८० ॥**
**यथानन्वयतादोषस्तथात्राप्यनिदर्शनात् । हेतोरनन्वयस्यापि गमकत्वोपवर्णने ॥ ३८१ ॥**
**सत्ता साध्यास्तु मानानामिति धर्मी न संगरः । धर्मिधर्मसमूहोत्र पक्ष इत्यपसारितम् ॥३८२**
**एतेनेति स्थितः साध्यः पक्षो विध्वस्तबाधकः । व्याप्तिकाले मतः साध्यः पक्षो येषां निराकुलः ॥**
**सोन्यथैव कथं तेषां लक्षणव्यवहारयोः । व्याप्तिः साध्येन निर्णीता हेतोः सार्धं प्रसाध्यते३८४**
**तदेवं व्यवहारेपीत्यनवद्यं न चान्यथा । धर्मिणोप्यप्रसिद्धस्य साध्यत्वाप्रतिघाततः ॥ ३८५ ॥**
**अस्ति धर्मिणि धर्मस्य चेति नोभयपक्षता । तद्यत्र साधनाद्बोधो नियमादभिजायते ॥ ३८६ ॥**
**स तस्य विषयः साध्यो नान्यः पक्षोस्तु जातुचित् ।**

तदेवं शक्यत्वादिविशेषणसाध्यसाधनाय कालापेक्षत्वेन व्यवस्थापिते अन्यथानुपपत्त्येकलक्षणे साधने च प्रकृतमभिनिबोधलक्षणं व्यवस्थितं भवति । यः साध्याभिमुखो बोधः साधनेनानिंद्रियसहकारिणा नियमितः सोभिनिबोधः स्वार्थानुमानमिति कश्चिदाह;—

**इंद्रियाणींद्रियार्थाभिमुखो बोधो न तु स्मृतः । नियतोक्षमनोभ्यां यः केवलो न तु लिंगजः ३८७**

इंद्रियानिंद्रियाभ्यां नियमितः कृतः स्वविषयाभिमुखो बोधोभिनिबोधः प्रसिद्धो न पुनरनिंद्रियसहकारिणा लिंगेन लिंगिनियमितः केवल एव चिंतापर्यंतस्याभिनिबोधत्वाभावप्रसंगात् । तथा च सिद्धांतविरोधोऽशक्यः परिहर्तुमित्यत्रोच्यते—

**सत्यं स्वार्थानुमानं तु विना यच्छब्दयोजनात् । तन्मानांतरतां मागादिति व्याख्यायते तथा ३८८**

न हि लिंगज एव बोधोभिनिबोध इति व्याचक्ष्महे । किं तर्हि । लिंगजो बोधः शब्दयोजनरहितोभिनिबोध एवेति तस्य प्रमाणांतरत्वनिवृत्तिः कृता भवति सिद्धांतश्च संगृहीतः स्यात् । न हींद्रियानिंद्रियाभ्यामेव स्वविषयेभिमुखो नियमितो बोधोभिनिबोध इति सिद्धांतोस्ति स्मृत्यादेस्तद्भावविरोधात् । किं तर्हि । सोनिंद्रियेणापि वाक्यभेदात् । कथं अनिंद्रियजन्याभिनिबोधे कमनिंद्रियजाभिमुखनियमितबोधनमिति व्याख्यानात् । नन्वेवमप्यर्थापत्तिः प्रमाणांतरमप्रत्यक्षत्वात् परोक्षभेदेषूक्तेष्वनंतर्भावात् । प्रमाणषट्कविज्ञातस्यार्थस्यानन्यथाभवनयुक्तस्य सामर्थ्याददृष्टान्यवस्तुकल्पने अर्थापत्तिव्यवहारात् । तदुक्तं । "प्रमाणषट्कविज्ञातो यत्रार्थोनन्यथा भवेत् । अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता ॥" प्रत्यक्षपूर्विका ह्यर्थापत्तिः प्रत्यक्षविज्ञातादर्थादन्यथा दृष्टेर्थे प्रतिपत्तिर्यथा रात्रिभोजी देवदत्तोयं दिवा भोजनरहितत्वे

अथ चतुर्थं शुक्लं को ध्यायतीत्याह;—

**ततः स्वयं समुच्छिन्नप्रदेशस्पंदनं [illegible]ः। ध्वस्तनिःशेषयोगेभ्यो ध्यानं ध्यातांतसंवरः ॥१३॥**
**संपूर्णनिर्जरश्चांत्ये क्षणे क्षीणभवस्थितिः। मुख्यं सिद्धत्वमध्यास्ते प्रसिद्धाष्टगुणोदयं ॥ १४।**

अथामनस्कस्य केवलिनः कथमेकाग्रचिंतानिरोधलक्षणं ध्यानं सभाव्यते इत्यारेकायामिदमाह;—

**संक्लेशांगतयैकत्र चिंता चिंतांतरच्युता। पापं ध्यानं यथा प्रोक्तं व्यवहारनयाश्रयात् ॥ १५॥**
**विशुद्ध्यंगतया चैवं धर्म्यं शुक्लं च किंचन। समनस्कस्य तादृक्षं नामनस्कस्य मुख्यतः ॥१६॥**
**उद्भूतकेवलस्यास्य सकृत्सर्वार्थवेदिनः। ऐकाग्र्यभावतः केचिदुपचाराद्वदंति तत् ॥ १७॥**
**चिंतानिरोधसद्भावो ध्यानात्सोपि निबंधनं। तत्र ध्यानोपचारस्य योगे लेश्योपचारवत् ॥ १८**
**सर्वचिंतानिरोधस्तु यो मुख्यो निश्चितान्नयात्। सोस्ति केवलिनः स्थैर्यमेकाग्रं च परं सदा ॥१९**
**मुख्यं ध्यानमतस्तस्य साक्षान्निर्वाणकारणं। छद्मदृश्योपचारात्स्यात्तदन्यास्तित्वकारणात् ॥ २०**
**यथैकवस्तुनि स्थैर्यं ज्ञानस्यैकाग्र्यमिष्यते। तथा विश्वपदार्थेषु सकृत्तत्केन वार्यते ॥ २१॥**
**मोहानुद्रेकतो ज्ञातुर्यथा व्याक्षेपसंक्षयः। मोहिनोस्ति तथा वीतमोहस्यासौ सदा न किम्॥२२**
**यथैकत्र प्रधानेर्थे वृत्तिर्वा तस्य मोहिनः। तथा केवलिनः किं न द्रव्येऽनंतविवर्तके ॥ २३॥**
**इति निश्चयतो ध्यानं प्रतिषेध्यं न धीमता। प्रधानं विश्वतत्त्वार्थवेदिनां प्रस्फुटात्मनां ॥२४॥**
**सयोगकेवली ध्यानी यदि धर्मोपदेशना। कथं ततः प्रवर्तेतेत्येके तत्राभिधीयते ॥ २५॥**
**अंतर्मुहूर्तकालं वा ध्यानस्यानेकवत्सरं। नैकाग्र्यं केवलिध्यानं प्रसिद्धं तत्त्वदेशिनाम् ॥ २६॥**
**तत एव च ते सिद्धाः कृतकृत्या जिनाधिपाः। स्तूयंते सिद्धसाधर्म्यात्सदेहत्वेपि धीधनैः ॥२७**
**अयोगित्वसमुद्भूतेः पूर्वमंतर्मुहूर्तमा। तृतीयं ध्यानमाख्यातं वाक्प्रवृत्त्या विवर्जितं ॥ २८॥**
**वाक्कायवृत्तिसद्भावे यथा ध्यानी न मादृशः। तथार्हन्निति तस्यास्तूपचाराद्ध्यानदेशना ॥२९**

तदेतद्व्यवहारनिश्चयनयनिरूपणनिपुणैः प्रमाणांतःकरणप्रवणैः सर्वमालोच्यं परमगहनत्वाच्छद्मस्थास्मादृशजनानामिति निवेदयन्नुपसहरति;—

**क्वचिच्चिंता ध्यानं नियतविषयं पुंसि कथितं क्वचित्तस्याः कार्त्स्न्याद्विलयनमिदं सर्वविषयं।**
**क्वचित्किंचिन्मुख्यं गुणमपि वदंति प्रतिनयं ततश्चिंत्यं सद्भिः परमगहनं जिनपतिमतं ॥३०॥**

इति नवमाध्यायस्य प्रथममाह्निकम्।

## सम्यग्दृष्टिश्रावकविरतानंतवियोजकदर्शनमोहक्षपकोपशमकोपशांतमोहक्षपकक्षीणमोहजिनाः क्रमशोऽसंख्येयगुणनिर्जराः ॥ ४५ ॥

किमर्थमिदमप्रस्तुतमुच्यते' तपसा निर्जरा चेति प्रकृते तपसि बाह्येभ्यंतरे च ध्यानपर्यंते व्याख्याते सर्वसम्यग्दृष्टीनां यथासंभवं बाह्यरूपेणाभ्यंतररूपेण च तपसा समाननिर्जरात्वप्रसक्तौ तद्विशेषप्रतिपादनार्थं प्रस्तुतमेवेदं युक्तमभिधातुं। कुतः पुनः सम्यग्दृष्ट्यादयोऽसंख्येयगुणनिर्जरा क्रमाद्भवंतीत्याह—

**सम्यग्दृष्ट्यादयः संत्यसंख्येयगुणनिर्जराः। क्रमादत्र तथा शुद्धेरसंख्येयगुणत्वतः ॥ १॥**

प्रथमं सम्यक्त्वादिप्रतिलंभे अध्यवसायविशुद्धिप्रकर्षादसख्येयगुणनिर्जरत्व दशानां। प्रथमं हि भव्यस्योपशमसम्यक्त्वं तदादयो वेदकसम्यक्त्वक्षायिकसम्यग्दर्शनश्रावकत्वादयः सूत्रोक्तास्तत्र प्रतिलब्ध-

...विशुद्धिप्रकर्षाद्दशानामपि क्रमादसंख्येयगुणनिर्जरत्वमुपपद्यते । क्षपक इत्यसाधुरन्वाख्यानाभा... ...नेन, चशब्देन मितसंज्ञोपलब्धेः । क्षि जि पै क्षये इत्यस्य कृतात्वस्य णौ पुकि कृते जनी-जृष्-...नोऽमन्ताश्चेति चशब्देन मितसंज्ञोपलब्धेर्ह्रस्वत्वात् साधुरेव क्षपकशब्द इत्यर्थः ॥

...थ तपोभाजा संयताना परस्परं गुणविशेषाद्भेदेपि नैगमनयान्नैर्ग्रंथ्यसाम्यमादर्शयन्नाह;—

## पुलाकवकुशकुशीलनिर्ग्रंथस्नातका निर्ग्रंथाः ॥ ४६ ॥

अपरिपूर्णव्रता उत्तरगुणहीनाः पुलाकाः. ईषद्विशुद्धिपुलाकसादृश्यात् । अखंडितव्रताः शरीरसंस्कार-...सुखयशोविभूतिप्रवणा वकुशाः, छेदशवलयुक्तत्वात् । बकुशशब्दो हि शबलपर्यायवाचीह । कुशीला द्विविधाः प्रतिसेवनाकषायोदयभेदात् । कथंचिदुत्तरगुणविराधनं प्रतिसेवना ग्रीष्मे जंघाप्रक्षालनवत्, संज्वलनमात्रोदयः कषायोदयस्तेन योगात् मूलोत्तरगुणभृतोपि प्रतिसेवनाकुशीलाः कषायकुशीलाश्चो-च्यंते । उदके दंडराजिवत्सन्निरस्तकर्माणोंऽतर्मुहूर्तकेवलज्ञानदर्शनप्रापिणो निर्ग्रंथाः । प्रक्षीणघातिकर्माणः केवलिनः स्नातकाः. स्नातं वेदसमाप्ताविति स्वार्थिके के निष्पन्नः शब्दः । कुत एते निर्ग्रंथाः पंचापि मता इत्याह.—

पुलाकाद्या मताः पंच निर्ग्रंथा व्यवहारतः । निश्चयाच्चापि नैर्ग्रंथ्यसामान्यस्याविरोधतः ॥१॥
वस्त्रादिग्रंथसंपन्नास्ततोन्ये नेति गम्यते । बाह्यग्रंथस्य सद्भावे ह्यंतर्ग्रंथो न नश्यति ॥ २ ॥
ये वस्त्रादिग्रहेप्याहुर्निर्ग्रंथत्वं यथोदितं । मूर्च्छानुद्भूतितस्तेषां स्त्र्याद्यादानेपि किं न तत् ॥ ३॥
विषयग्रहणं कार्यं मूर्छा स्यात्तस्य कारणं । न च कारणविध्वंसे जातु कार्यस्य संभवः ॥ ४ ॥
विषयः कारणं मूर्छा तत्कार्यमिति यो वदेत् । तस्य मूर्छोदयोऽसत्त्वे विषयस्य न सिद्ध्यति ॥५॥
तस्मान्मोहोदयान्मूर्छा स्वार्थे तस्य ग्रहस्ततः । स यस्यास्ति स्वयं तस्य न नैर्ग्रंथ्यं कदाचन ॥६

कश्चिदाह—प्रकृष्टाप्रकृष्टगुणाना निर्ग्रंथत्वाभावश्चारित्रभेदात् गृहस्थवदिति तं प्रत्याह—न च, दृष्टत्वा-द्ब्राह्मणशब्दवत् । न हि जात्याचाराध्ययनादिभेदाद्भिन्नेषु ब्राह्मणत्वं विरुध्यते, संग्रहव्यवहारापेक्षत्वात् निश्चयनयादेव समग्रगुणेषु तद्व्यपदेशसिद्धेः । किं च, दृष्टिरूपसामान्यात् सर्वेषां निर्ग्रंथता न विरुध्यते । भग्नव्रते वृत्तावतिप्रसंग इति चेन्न, रूपाभावात् । निर्ग्रंथरूपं हि यथाजातरूपमसंस्कृतं भूषावेशायुधवि-रहितं गृहस्थेषु न संभवतीति । ( अन्यस्मिन् सरूपेतिप्रसंग इति चेन्न, दृष्ट्यभावात् ) ॥

तेषां पुलाकादीना भूयोपि विशेषप्रतिपत्त्यर्थमिदमाह;—

## संयमश्रुतप्रतिसेवनातीर्थलिंगलेश्योपपादस्थानविकल्पतः साध्याः ॥ ४७ ॥[1]

............................................................................................................

............................................................................................................

................................................................................ ॥

इति नवमाध्यायस्य द्वितीयमाह्निकम् ।

इति श्रीविद्यानंदिआचार्यविरचिते तत्त्वार्थश्लोकवार्तिकालंकारे नवमोऽध्यायः समाप्तः ॥ ९ ॥

---

१ अत्र संयमश्रुतेत्यादिनवमाध्यायांतसूत्रस्य दशमाध्यायस्यादिसूत्रद्वयस्य व्याख्यानं गतं तत्पुस्तकांतराल्लिखनीयं ॥